२०. रमा **कमलम्** अधिवसति ।

२१. **हिमालयम्** अभितः अरण्यानि सन्ति ।

There are forests around the Himālaya.

२२. कुटुम्बिन्यः[10] **देवताम्** अभितः उपविशन्ति ।

२३. वैदेही[11] **रामं** विना न विहरति ।

२४. ऋषयः **आहारं** विनापि जीवन्ति ।

२५. सैनिकाः **मार्गम्** उभयतः अगच्छन् ।

२६. नार्यः **गृहम्** उभयतः मार्जयन्ति ।

Women clean both the sides of the house.

## द्वितीयाविभक्तिरूपाणि

| | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| अकारान्तः | रामम् - रामान् | ........... ........... | वनम् - वनानि |
| आकारान्तः | ........... ........... | रमाम् - रमाः | ........... ........... |
| इकारान्तः | हरिम् - हरीन् | मतिम् - मतीः | दधि - दधीनि |
| ईकारान्तः | ........... ........... | नदीम् - नदीः | ........... ........... |
| उकारान्तः | गुरुम् - गुरून् | ........... ........... | मधु - मधूनि |

All words ending in 'अ' in the Masculine (पुं) are declined like 'राम' and those in Neuter (नपुं) are declined like 'वन'. Feminine (स्त्री) words ending in 'आ' are like 'रमा'. Masculine words ending in 'इ' and 'उ' are like 'हरि' and 'गुरु' and feminine words ending in 'इ'and 'ई' are like 'मति' and 'नदी' respectively.

In the forth coming lessons also, the declension of Instrumental case forms etc would be illustrated for each word. On the same lines, you have to learn by practice the other forms of the declension.

---

10. कुटुम्बिन्यः - housewives, 11. वैदेही - Sīta.

## सर्वनामशब्दानां रूपाणि

| | पुं. | स्त्री. | नपुं. |
|---|---|---|---|
| दकारान्तः 'तद्'शब्दः | तम् - तान् | ताम् - ताः | तत् - तानि |
| दकारान्तः 'एतद्'शब्दः | एतम् - एतान् | एताम् - एताः | एतत् - एतानि |
| मकारान्तः 'किम्'शब्दः | कम् - कान् | काम् - काः | किम् - कानि |
| दकारान्तः त्रिलिङ्गकः 'अस्मद्'शब्दः - माम् - अस्मान् | | | |
| दकारान्तः त्रिलिङ्गकः 'युष्मद्'शब्दः - त्वाम् - युष्मान् | | | |

### Some Rules Pertaining to the Accusative Case

1. When the questions 'what ?' and 'whom?' are put, the answer that is got is the object. In Active voice the object is in the Accusative case.

   उदा - बालकः चित्रं लिखति । बालकः किं लिखति ?

   चित्रम् - The Picture.

2. When तिष्ठति and वसति are preceded by the Preposition (उपसर्ग) 'अधि' the words expressing Location, (which should have been in the Locative case (सप्तमी)) will be in the Accusative Case.

   उदा - व्याघ्री कुत्र अधितिष्ठति ? वनम् ।

   'Where does the tigress live ?' 'In the forest.' Here we have वनम् instead of वने ।

3. When the words अभितः, परितः, and उभयतः are used, words expressing the sense of Genitive case should be in the Accusative Case.

   उदा - कम् अभितः अरण्यानि सन्ति ? हिमालयम्

   Around what are the forests ? Around Himalaya. Here हिमालयम् should be used instead of हिमालयस्य ।

4. Similarly When विना is used, words governed by it are in the Accusative case.

उदा - जलं विना जीवनं नास्ति ।

## अभ्यासः

**I.** Change the following present tense sentences into imperative mood sentences.
(Pay attention to the personal Pronoun while transforming)

**(अ)** उदा - सः गृहं गच्छति      सः गृहं गच्छतु ।

१. बालाः पाठं पठन्ति । ......... ......... .........
२. त्वं फलं खादसि । ......... ......... .........
३. यूयं कथां लिखथ । ......... ......... .........
४. अहं क्रीडामि । ......... ......... .........
५. वयं चित्रं पश्यामः । ......... ......... .........
६. पितामहः कथां वदति । ......... ......... .........
७. भक्ताः देवं नमन्ति । ......... ......... .........
८. त्वं पुस्तकं नयसि । ......... ......... .........

**(आ)** उदा - पुत्रः रसं स्वदते      पुत्रः रसं स्वदताम् ।

१. जनाः धीरं श्लाघन्ते । ......... ......... .........
२. चोराः पलायन्ते । ......... ......... .........
३. त्वं स्पर्धसे । ......... ......... .........
४. यूयं लज्जध्वे । ......... ......... .........
५. अहं मोदे । ......... ......... .........
६. वयं भाषामहे । ......... ......... .........
७. बालाः आकाशम् ईक्षन्ते । ......... ......... .........
८. सस्यानि वर्धन्ते । ......... ......... .........

**II.** Answer the following questions.

**(अ)** १. तक्षकः किं तक्षति ?
२. शिशवः कां पठन्ति ?
३. गुरवः कानि अवदन् ?

४. अङ्गनाः कान् गायन्ति ?
५. कुमारी कान् पृच्छति ?
६. समितिः काम् अयच्छत् ?

**(आ)** Change the sentences using the prefix 'अधि'.

उदा - विष्णुः क्षीराब्धौ वसति । विष्णुः क्षीराब्धिम् अधिवसति ।
१. पार्वती कैलासे वसति । ......... ......... .........
२. धनिकः गृहे वसति । ......... ......... .........
३. संन्यासी कुटीरे तिष्ठति । ......... ......... .........
४. सांसदः देहल्यां वसति । ......... ......... .........
५. सरस्वती हंसे तिष्ठति । ......... ......... .........

**(इ)** Make sentences with the help of the words given below.

उदा - शर्करा, परितः, पिपीलिकाः । शर्करां परितः पिपीलिकाः सन्ति ।
१. विद्यालयः, परितः, उद्यानम् ....... ......... ......... .........
२. गृहं, परितः, वृक्षाः ....... ....... ......... ......... .........
३. चोरः, उभयतः, आरक्षकाः ..... ........ ........ ........
४. मार्गः, उभयतः, पादपथः ........ ........ ........ ........
५. दुर्गम्, अभितः, नदी ........ ........ ........ ........
६. द्वीपः, अभितः, समुद्रः ........ ........ ........ ........
७. आहारः, विना, मानवः, न जीवति ..... ....... ....... .......
८. चन्द्रः, विना, आकाशः, न शोभते ..... ...... ..... ........

**(ई)** Give the Accusative forms of the pronoun mentioned in brackets according to their number.

उदा - अहं (ते) तान् आह्वयामि ।
१. सः (सा) ........... उक्तवान् ।
२. अध्यापकः (एते) ........... सूचितवान् ।
३. अध्यापिका (के) ........... पृष्टवती ?

४. अधिकारी (वयम्) ........... आदिष्टवान् ।
५. रमेशः (त्वम्) ........... जानाति ।
६. जनकः (यूयम्) ........... तर्जितवान् ।

(**Note :** Compare your answers with those on the end of this book and ascertain their correctness.)

## २. व्यावहारिकशब्दाः

### लेखनसामग्री

| | | | | | |
|---|---|---|---|---|---|
| १. | सुधाखण्डः | - | Sudhākhaṇḍaḥ | = | A piece of chalk |
| २. | रब्बरबन्धः | - | Rubberabandhaḥ | = | Rubber band |
| ३. | निर्यासः | - | Niryāsaḥ | = | Gum |
| ४. | पत्रभारः | - | Patrabhāraḥ | = | Paper weight |
| ५. | उत्पीठिका | - | Utpīṭhikā | = | Table |
| ६. | अन्तःपेटिका | - | Antaḥpetikā | = | Draw |
| ७. | रन्ध्रिका | - | Randhrikā | = | Punching Machine |
| ८. | मृदुमुद्रा | - | Mṛdumudrā | = | Rubber stamp |
| ९. | मापिका | - | Māpikā | = | Scale |
| १०. | लेपनपट्टिका | - | Lepanapattikā | = | adhesive tape |
| ११. | लेखनी | - | Lekhanī | = | Pen |
| १२. | अङ्कनी | - | Aṅkanī | = | Pencil |
| १३. | वर्णलेखनी | - | Varṇalekhanī | = | Sketch-Pen |
| १४. | योजिनी | - | Yojinī | = | Stapler |
| १५. | पत्रसूची | - | Patrasūcī | = | Pin |
| १६. | मार्जनी | - | Mārjanī | = | Eraser |
| १७. | कर्तरी | - | Kartarī | = | Scissors |
| १८. | पुस्तकम् | - | Pustakam | = | Book |

१९. श्वेतपत्रम् - Śvetapatram = Sheet of white paper
२०. लेखनपीठम् - Lekhanapīṭham = Desk
२१. दंशकम् - Damśakam = Gem clip
२२. कृष्णफलकम् - Kṛṣṇaphalakam = Black board

## ३. प्रहेलिका

विष्णोः का वल्लभा देवी लोकत्रितयचारिणी ?
वर्णावाद्यन्तिमौ दत्त्वा कः शब्दः तुल्यवाचकः ?

Viṣṇoḥ kā vallabhā devī lokatritayacārinī ?
Varṇāvādyantimou dattvā kaḥ śabdaḥ tulyavācakaḥ ?

Who is that who roams about the three worlds and who is the beloved consort of Viṣṇu, in whose name if a letter is added in the beginning and one in the end it would mean 'equal' ?

(**Answer** - See the Page No - 98 )

## ४. सङ्ग्राह्यविषयाः

### सरस्वती

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥

O ! Goddess ! Sarasvati ! You grant boons and you can take any desired form. Salutations to you. I am commencing my studies. Bless me with success.(May I always be successful.)

नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यां बुद्धिं च देहि मे ॥

O' Goddess residing in Kāśmīr ! O' Śārada ! I bow to you. I pray to you to bestow on me learning and wisdom.

# ५. संस्कृतवाङ्मयपरिचयः

## महाभारतम्

''भारतं पञ्चमो वेदः'' The Mahābhārata is considered as the fifth veda. This is the greatness accorded to the Mahābhārata. Although the story of Kauravās and Pāṇḍavās is the main theme there are many anecdotes and moral stories in it. It is the source of the themes of many a Samskrit Kavya. Bhīṣma's advice, Vidura's teachings and the Bhagavad Gītā are the most important sections in the Mahābhārata.

'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्'

(Whatever is found in it is found elsewhere, what is not found in it doesn't exist anywhere). This is a praise which is befitting the Mahābhārata. There are characters in it which represent all aspects of human nature such as stubbornness, slandermongering, gluttony, paternal over indulgence,generosity, devotion towards the teacher and honesty. The characters of Duryodhana, Śakuni, Bakāsura, Dhṛtarāṣṭra, Karṇa, Ekalavya and Dharmarāja represent these qualities of human nature respectively.

Among 1 Lakh verses of the Mahābhārata, over 800 verses are considered Vyāsarahasya (secret message of Vyāsa). These verses are very difficult to understand. It is said that while getting the Mahābhārata written by Gaṇapati acting as scribe Vyāsa used to recite such verses just gaining time to compose the next verses in the narration. It was an agreed condition that Vyāsa should dictate the stanzas continuously without a pause, or Gaṇapati would stop taking dictation.

The Mahābhārata is a very exhaustive work. No other literary work in the world can equal it in length. It is more than the length of the Greek classics, Illiad and Odessey put together. ''महत्त्वात् भारवत्वात् च महाभारतमुच्यते ।'' The name Mahābhārata is very apt because of the great depth of its content and volume.

# ६. कथा

## विद्यायाः महत्त्वम्

एकं नगरम् आसीत् । तत्र रामः सोमः इति मित्रद्वयम् आसीत् । रामः विद्याम् इच्छति । सोमः धनम् इच्छति । एकदा मित्रद्वयं विदेशम् अगच्छत् । रामः तत्र विद्याभ्यासम् अकरोत् । सोमः धनसम्पादनम् अकरोत् । अनेकानि वर्षाणि अगच्छन् । मित्रद्वयम् अपि स्वनगरम् आगच्छत् । मार्गे चोराः आगच्छन् । सोमस्य धनम् अहरन् । अनन्तरं मित्रद्वयं नगरम् आगच्छत् ।

नगरे महाराजः आसीत् । सः मित्रद्वयम् अपश्यत् । अनन्तरं विद्यावन्तं रामम् आह्वयत् । ''त्वं मन्त्रिस्थाने तिष्ठ'' इति अवदत् । रामः मन्त्री अभवत् । सोमः विद्याविहीनः । सः जीवनार्थं रामस्य सेवकः अभवत् ।

## VIDYĀYĀḤ MAHATTVAM

Ekam nagaram āsīt. Tatra Rāmaḥ, Somaḥ iti mitradvayam avasat. Rāmaḥ vidyām icchati. Somaḥ dhanam icchati. Ekadā mitradvayam videśam agacchat. Rāmaḥ tatra vidyām apaṭhat. Somaḥ dhanasampādanam akarot. Anekāni varṣāṇi agacchan. Mitradvayam api svanagaram āgacchat. Marge corāḥ āgacchan. Somasya dhanam aharan. Anantaram mitradvayam nagaram āgacchat.

Nagare Maharājaḥ āsīt. Saḥ mitradvayam apaśyat. vidyāvantam Rāmam āhvayat. 'Tvam mantristhāne tiṣṭha' iti akathayat. Rāmaḥ mantrī abhavat. Somaḥ vidyāvihīnaḥ. Saḥ Jīvanārtham Rāmasya sevakaḥ abhavat.

## THE VALUE OF LEARNING

There was a City. There lived in it two friends, Rāma and Soma. Rāma aspired for learning. Soma aspired for money. Once both the friends went to a foreign country. Rāma learnt the lore there. Soma made a lot of money. Many years passed. Both the friends came to their city. On the way thieves came. They stole Soma's money. Then both the friends came to their city.

There was a king in the City. He saw the two friends. Then he invited the learned Rāma. 'I want you to be a minister in my Court', said the king. Rāma became the minister. Soma was not learned. He became the servant of Rāma for earning his livelihood.

**एतेषाम् उत्तरं लिखत ।**

१. रामः किम् इच्छति ?
२. कः धनम् इच्छति ?
३. मित्रद्वयं कुत्र अगच्छत् ?
४. रामः सोमः च किम् अकरोत् ?
५. राजा रामं किम् अवदत् ?

## ७. संस्कृतव्यवहारः

**स्म**

Study the following sentences.

१. गोपालः अभिनयं करोति स्म । - Gopala was acting/used to act.
२. ते भजनं कुर्वन्ति स्म । - They were worshipping/used to worship through songs.
३. अहं नृत्यं करोमि स्म । – I was dancing/used to dance.
४. ताः विज्ञानं पाठयन्ति स्म । - They (feminine) were teaching/ used to teach science.
५. वयम् असत्यं वदामः स्म । - We were telling/ued to tell lies.
६. त्वं गायसि स्म । - You were singing/used to sing.

In the above sentences the use of 'स्म' denotes the happening in past. गोपालः अभिनयं करोति स्म । It means 'Gopala was acting'. You must note that 'स्म' is always suffixed to a Present tense form.

**लेखननियमः**

सः कार्यं अकरोत् । अहं ग्रन्थं अपठं ।

Observe these two sentences. Anusvāra ( ˙ ) is found in both the sentences. In such places a doubt arises whether Anusvāra ( ˙ ) or the letter (म्) should be used. Concerning this there are the following rules.

1. If Anusvāra is followed by a vowel the letter (म्) should be written in its place.

   उदा - पुस्तकम् आनयति । क्षीरम् इच्छति । जलम् उष्णम् अस्ति ।

2. If Anusvāra is at the end of a sentence the letter (म्) should be written in its place.

   उदा - एतत् पुस्तकम् । अयोध्या सुन्दरं नगरम् । अहं वाक्यम् अवदम् ।

3. In the rest of the instances (i.e if an anusvāra is followed by any consonant) it should be written with a dot above the letters as ˙

   उदा - सः नगरं गच्छति । रामः फलं खादति ।

The rule is followed in all the lessons and it should be strictly followed while writing in Samskrit script .

**अभ्यासः**

1. Using 'स्म' translate the following sentences into Samskrit.
   1. He was reading.
   2. I was singing.
   3. People were working hard.
   4. She was scolding.
   5. We were playing.
2. Apply the rule of Anusvāra in the following sentences.

   १. एकं उद्यानं आसीत् ।

२. अहम् पत्रिकां अपठं ।
३. तं अहं एकाम् कथां अवदं ।
४. त्वम् गृहं आगत्य चित्रं अलिखः ।
५. सः महान्तं आनन्दं अनुभूतवान् ।

(Answers given below)

## ८. सुभाषितम्

आचार्यात् पादमादत्ते पादं शिष्यः स्वमेधया ।
पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च ।।

Ācāryāt pādamādatte pādam śiṣyaḥ svamedhayā ।
Pādam sabrahmacāribhyaḥ pādam kālakrameṇa ca ।।

A pupil learns only a quarter from his teacher, acquires another quarter from his own intelligence, receives yet another quarter from his classmates and gets the other quarter in course of time.

**Answer to the Riddle**

मा = Lakṣmi, स and न are the letters to be joined.
समानम् = equal.

---

**उत्तराणि -**

**i.** १. सः पठति स्म । २. अहं गायामि स्म । ३. जनाः परिश्रमं कुर्वन्ति स्म । ४.सा तर्जयति स्म । ५. वयं क्रीडामः स्म ।

**ii.** १. एकम् उद्यानम् आसीत् । २. अहं पत्रिकाम् अपठम् । ३. तम् अहम् एकां कथाम् अवदम् । ४. त्वं गृहम् आगत्य चित्रम् अलिखः । सः महान्तम् आनन्दम् अनुभूतवान् ।

# प्रवेशः - पञ्चमः पाठः
# Questions

1. Translate the following sentences into Samskrit using परस्मैपदी verbs.
   1. Let the boy study the lessons.
   2. Let the cat drink the milk.
   3. Let the fishermen go to the river.
   4. Let not the tiger eat the deer.
   5. Let us go to the theatre.
   6. Shall I go to temple ?
2. Using आत्मनेपदी verbs, translate the following sentences into Samskrit.
   1. You try.
   2. Let them examine the books.
   3. Let Sītā compete.
   4. You taste the fruits.
   5. Let us guess the answer.
3. Answer the following questions.
   1. How many ślokās are there in the Mahābhārata ?
   2. Why did it get the name Mahābhārata ?
   3. What is meant by 'Vyāsarahasya' ?
   4. What appreciation Mahābhārata has earned ?
4. Write the meaning of the following verbs.

   १. लिखत २. यच्छ ३. नमत ४. भाषध्वम् ५. वर्धताम्

(**Note:** Answers for the above exercises are given in the end of this book. After completing them, check your answers.)

# प्रवेशः - षष्ठः पाठः

**।। चित्ते वाचि क्रियायां च महतामेकरूपता ।।**

Noble persons are one in mind, word and deed.

*(We understand that you have continued the practice of reading Samskrit script. Therefore, hereafter Samskrit sentences will be given in Devanāgarī. Study them carefully.)*

## १. भाषाभ्यासः

**Verb**

१. रामः श्वः नगरं गमिष्यति । = Rama will go to the city tomorrow.

२. मातुलः श्वः आगमिष्यति । = Maternal uncle will come tomorrow.

३. निर्धनाः कष्टम् अनुभविष्यन्ति । = The poor people will experience difficulty.

४. श्वः सभायां सखी गास्यति ।= A friend (fem) will sing in the assembly tomorrow.

५. अग्रिमसप्ताहे गुरुः व्याकरणं पाठयिष्यति । = The teacher will teach grammar next week.

६. तौ श्वः राजधानीं गमिष्यतः । = They both will go to the capital tomorrow.

७. दुष्टान् देवः दण्डयिष्यति । = God will punish the wicked.

८. श्वः प्रातः सः धनं दास्यति । = He will give money tomorrow morning.

९. ते परश्वः स्पर्धिष्यन्ते । = They will compete the day after tomorrow.

१०. सस्यानि वेगेन वर्धिष्यन्ते । = Plants will grow fast.

११. किं त्वम् उत्तीर्णः भविष्यसि ? = Will you pass ?

१२. त्वं प्रयतिष्यसे चेत् वर्धिष्यसे । = If you try you will improve.

१३. त्वं श्वः मेलिष्यसि किम् ? = Will you meet me tomorrow ?

१४. अहं श्वः मेलनार्थं प्रयत्नं करिष्यामि । = I will try to meet (you) tomorrow.

१५. प्रपरश्वः अहं पुस्तकं प्रतिदास्यामि । = I will return the book two days after tomorrow.

१६. चित्रं दृष्ट्वा अहं मोदिष्ये । = I will be happy after seeing the picture.

१७. श्वः अहं पञ्चवादने उत्थास्यामि । = I will get up at five o' clock tomorrow.

१८. वयं श्वः कथां पठिष्यामः । = We will read the story tomorrow.

१९. भवन्तः धनं न लप्स्यन्ते । = You will not get the money.

२०. वयं महापुरुषाः भविष्यामः । = We will become great men.

## भविष्यत्कालस्य रूपाणि

### परस्मैपदी धातुः

| | ए.व. | द्वि.व. | ब.व. |
|---|---|---|---|
| प्र.पु. | पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| म.पु. | पठिष्यसि | पठिष्यथः | पठिष्यथ |
| उ.पु. | पठिष्यामि | पठिष्यावः | पठिष्यामः |

**आत्मनेपदी धातुः**

| | ए.व. | द्वि.व. | ब.व. |
|---|---|---|---|
| प्र.पु. | वन्दिष्यते | वन्दिष्येते | वन्दिष्यन्ते |
| म.पु. | वन्दिष्यसे | वन्दिष्येथे | वन्दिष्यध्वे |
| उ.प. | वन्दिष्ये | वन्दिष्यावहे | वन्दिष्यामहे |

It is not difficult to learn future tense forms since you know the present tense forms. The knower of nine forms of 'पठति' can guess all the nine forms of 'पठिष्यति'. In the same manner one who knows वन्दते, can easily understand वन्दिष्यते.

In future tense 'स्य' (sometimes ष्य) that is used, differentiates it from present tense. Some examples are given below.

| प.प. | आ.प. |
|---|---|
| क्रीडति → क्रीडिष्यति | भाषते → भाषिष्यते |
| गच्छति → गमिष्यति | वर्धते → वर्धिष्यते |
| भवति → भविष्यति | मोदते → मोदिष्यते |
| लिखति → लेखिष्यति | स्पर्धते → स्पर्धिष्यते |
| करोति → करिष्यति | यतते → यतिष्यते |

The addition of 'इ' before स्य/ष्य is not found in all future tense forms. Study a few such examples below.

पिबति - पास्यति

नयति - नेष्यति

उपविशति - उपवेक्ष्यति

उत्तिष्ठति - उत्थास्यति

जानाति - ज्ञास्यति

शृणोति - श्रोष्यति

शक्नोति - शक्ष्यति

ददाति - दास्यति

पृच्छति - प्रक्ष्यति
नमति - नंस्यति
दधाति - धास्यति
लभ्यते - लप्स्यते
पश्यति - द्रक्ष्यति
गायति - गास्यति
पचति - पक्ष्यति

By continuous practice you will learn these forms.

**विभक्तिः**

**Sentences in instrumental case -**

१. कृषीवलः हलेन[१] कर्षति ।
२. भक्तः अञ्जलिना[२] वन्दते ।
३. त्वं करेण स्पृशसि ।
४. अहं परशुना[३] खण्डयामि ।
५. वयं नेत्राभ्यां पश्यामः ।
६. अतिथयः भोजनेन मोदन्ते ।
७. [४]खगाः पक्षैः [५]डयन्ते ।
८. वयं कुसुमैः पूजयामः ।
९. सर्पः दन्तैः [६]दशति ।
१०. माला पुष्पैः भवति ।
११. हारः मणिभिः भवति ।
१२. वस्त्रं [७]तन्तुभिः भवति ।
१३. भीमः गदया ताडयति ।
१४. जननी [८]अङ्गुल्या तर्जयति ।
१५. रात्रिः [९]चन्द्रिकया शोभते ।
१६. गुरवः लेखन्या अलिखन् ।
१७. अग्निः ज्वालया प्रकाशते ।
१८. त्वं [१०]रसनया [११]आस्वदसे ।
१९. अहं नासिकया [१२]जिघ्रामि ।
२०. त्वं विद्यया जीवसि ।

---

१. हलेन - with a plough, २. अञ्जलिना - with folded hands, ३. परशुना - with the axe, ४. खगाः - birds, ५. डयन्ते - fly. ६. दशति - bites, ७. तन्तुभिः - with yarns, ८. अङ्गुल्या - with finger, ९. चन्द्रिकया - with moonlight, १०. रसनया - with the tongue, ११. आस्वदसे - (you) taste, १२. जिघ्रामि - (I) smell.

२१. उत्तरदेशः नदीभिः विराजते ।
२२. अहं मालाभिः देवम् अलङ्करोमि ।
२३. स्त्रियः शिशुभिः सह अक्रीडन् । (सह - with)
२४. विद्यार्थिन्यः गुरुभिः सह अभाषन्त ।
२५. यजमानः अतिथिभिः सह उपविशति ।
२६. गुरुः छात्रैः साकम् अगच्छत् । (साकम् - with)
२७. सीता रामेण सार्धं विहरति । (सार्धम् - with)
२८. कृष्णः मया साकम् आगतवान् ।
२९. वयं मित्रैः सह सम्भाषामहे ।
३०. रामेण सह लक्ष्मणः अरण्यं गतवान् ।

## (For memorisation)

### तृतीयाविभक्तिरूपाणि

| | *पुंलिङ्गे* | *स्त्रीलिङ्गे* | *नपुंसकलिङ्गे* |
|---|---|---|---|
| अकारान्तः | रामेण - रामैः | (आ) रमया - रमाभिः | ज्ञानेन - ज्ञानैः |
| इकारान्तः | हरिणा - हरिभिः | मत्या - मतिभिः | दध्ना - दधिभिः |
| ईकारान्तः | ...... ...... | नद्या - नदीभिः | ..... ...... |
| उकारान्तः | गुरुणा - गुरुभिः | धेन्वा - धेनुभिः | मधुना - मधुभिः |

### सर्वनामशब्दाः

| | *पुं.* | *स्त्री.* | *नपुं.* |
|---|---|---|---|
| दकारान्तः 'तद्'शब्दः | तेन - तैः | तया - ताभिः | तेन - तैः |
| दकारान्तः 'एतद्'शब्दः | एतेन - एतैः | एतया - एताभिः | एतेन - एतैः |
| मकारान्तः 'किम्'शब्दः | केन - कैः | कया - काभिः | केन - कैः |
| दकारान्तः त्रिलिङ्गकः 'अस्मद्'शब्दः - मया - अस्माभिः | | | |
| दकारान्तः त्रिलिङ्गकः 'युष्मद्'शब्दः - त्वया - युष्माभिः | | | |

**Some rules pertaining to the Instrumental Case:**

1. The answer to the question 'by / with what ?' put on the verb, will be in the instrumental case. Eg: कर्षति - (he) tills; केन ? - with what ? हलेन - with the plough.
2. सह, साकं, सार्धम् - these words mean 'along with' or 'together with'. The answer to the question 'together with whom ?' or 'along with what ?' will be in the instrumental case. Eg. अक्रीडन् - (they) played; कैः सह ? with whom ? शिशुभिः सह - with children.
3. We have to use the abstract nouns in Instrumental case if they are adverbs.

   Eg. सः सन्तोषेण कार्यं करोति ।
   
   सा गर्वेण व्यवहरति ।

**अव्ययानि (Indeclinables)**

Words that do not change according to gender, number and case are called Avyayas or Indeclinables. There are some indeclinables ending in suffixes (प्रत्ययान्त) like गत्वा, गन्तुम् etc.

**A)** Some indeclinables are given below. It is also shown how they are to be used. Make your own sentences with these indeclinables.

अन्तः = inside, बहिः = outside, दिवा = in the day, तूष्णीम् = silently, स्वयम् = oneself, itself, मा = do not, एवम् = in this way, thus, इत्थम् - in this manner, सर्वदा = always, रे = O !, पुरा = long ago, अलम् = enough, किमर्थम् = for what purpose, सम्यक् = well, properly, सर्वत्र = everywhere, नक्तम् = in the night, सायम् = in the evening, पुनः = again, शनैः = slowly, चिरम् = for a long time, कदाचित् = once, उपरि = above, अधः = below, वृथा = in vain, सह = with, चेत् = if, उच्चैः = loudly, मन्दम् = gently, द्वारा = through, कृते = for.

## वाक्यानि

१. उद्यानात् **बहिः अन्तः च** वृक्षाः भवन्ति ।
२. आकाशे नक्षत्राणि **नक्तं** राजन्ति । **दिवा** न राजन्ति ।
३. सा गायति, **तूष्णीं** तिष्ठ ।
४. सचिवः **स्वयम्** आगत्य दृष्टवान् ।
५. त्वम् **एवं** मा कुरु ।
६. **इदानीम् इत्थं** वदसि किम् ?
७. किमर्थं छात्राः **सम्यक्** न पठन्ति ?
८. **पुरा** एकः नृपः आसीत् ।
९. त्वं **सर्वदा** पठ ।
१०. **सर्वत्र** वायुः अस्ति ।

**B)** **चेत्** = 'If', 'were it to happen', 'had it occurred'. To express the above the word **चेत्** should be added to the verbs in Present tense.

Eg. - 1. **करोति चेत्** - If one does 2. **आगच्छति चेत्** - Were (he) to come 3. **अस्ति चेत्** - If it is, 4. **नास्ति चेत्** – If not.

१. भवान् आगच्छति चेत् समीचीनम् ।
२. वृष्टिः भवति चेत् जनाः सन्तुष्टाः भवन्ति ।
३. समयः अस्ति चेत् मम गृहम् आगच्छ ।
४. अभ्यासं करोति चेत् भवान् उत्तीर्णः भवति ।
५. पुस्तकं गृहे अस्ति चेत् आनीय ददामि ।

(समीचीनम् - well, good; आनीय - having brought)

**C)** The following indeclinables are correlatives used together always.

१. यदा – तदा । २. यदि – तर्हि । ३. यावत् – तावत् ।
४. यथा – तथा । ५. यद्यपि – तथापि ।

Read the following sentences with these indeclinables:

**१. यदा तदा** (When - then)

१. 'यदा' धर्मस्य ग्लानिः भवति 'तदा' देवः अवतरति ।
When Dharma declines, then God incarnates.

२. यदा धनं लभ्यते तदा भिक्षुकः सन्तुष्टः भवति ।

३. यदा वसन्तकालः तदा कोकिलः कूजति ।

४. यदा सूर्यास्तः भवति तदा पक्षिणः नीडं प्रविशन्ति ।

(लभ्यते - is obtained, is available; कोकिलः - Cuckoo, कूजति - coos, नीडम् - nest.)

**२. यदि तर्हि** - (If - then)

१. 'यदि' विरामः अस्ति 'तर्हि' आगच्छ ।
If you have vacation, then you come.

२. यदि पुस्तकम् अस्ति तर्हि प्रदर्शय ।

३. यदि कार्यं समाप्तं तर्हि भवान् गच्छतु ।

४. यदि समयावकाशः लभ्यते तर्हि आगच्छामि ।

(प्रदर्शय - (you) show; समयावकाशः - leisure; लभ्यते - is got)

(Note - Instead of यदि - तर्हि, चेत् may be used.

**यदि** कार्यं समाप्तं **तर्हि** भवान् गच्छतु ।

कार्य समाप्तं **चेत्** भवान् गच्छतु ।

(However, the meaning of these two sentences is the same.)

**३. यावत् तावत्** (So long as)

१. 'यावत्' हिमालयः भवति 'तावत्' हिन्दुसंस्कृतिः तिष्ठति ।
As long as Himalaya stays, so long the Hindu culture stays.

२. यावत् सूर्यः तिष्ठति तावत् संस्कृतं विराजते ।

३. सः यावत् खादति तावत् एषः न खादति ।

४. सुवर्णस्य यावत् मूल्यं तावत् मूल्यं रजतस्य नास्ति ।

(विराजते - shines; मूल्यम् - price; रजतस्य - of silver)

**४. यथा तथा** (As-so)

१. यथा राजा तथा प्रजाः ।
As is the king so are the subjects.

२. यथा भवान् प्रयत्नं करोति तथा फलं प्राप्नोति ।

३. त्वं यथा वदसि तथा एव भवतु ।

४. यथा श्रेष्ठः आचरति तथा जनाः अपि आचरन्ति ।

(प्राप्नोति - obtains; भवतु - be it so; आचरति - conducts, behaves)

**५. यद्यपि तथापि -** (Even though - still)

१. 'यद्यपि' विभीषणः अग्रजं त्यक्तवान्, 'तथापि' न अयम् अधर्मः ।
Even though Vibhīṣaṇa left his elder brother, still it is not 'Adharma'.

२. अलसाः यद्यपि दृढकायाः, तथापि ते कार्यं न कुर्वन्ति ।

३. यद्यपि अहं सम्भाषणं करोमि, तथापि मम तृप्तिः नास्ति ।

४. यद्यपि तस्य समयावकाशः अस्ति, तथापि सः न आगच्छति ।

(अलसाः - the lazy; दृढकायाः - the strong - bodied)

## अभ्यासः

**I.** Change the following verbs into future tense.

**(अ)** उदा - पठति - पठिष्यति

१. भवति - .........  २. गच्छति - .........

३. भाषते - .........  ४. मोदते - .........

५. लिखति - ........  ६. यतते - .........

७. वन्दते - .........  ८. शोभते - .........

९. पूजयति - .......  १०. करोति - ..........

**(आ)** उदा - पिबति - पास्यति

१. नयति - ........  २. ददाति - .........

३. पश्यति - ........ ४. लभते - ..........

५. उपविशति - ....... ६. तिष्ठति - .........

७. वहति - ......... ८. जानाति - .........

९. प्राप्नोति - .......... १०. गायति - .........

**II.** Change the following sentences into future tense.

उदा - सः नगरं गच्छति । सः नगरं गमिष्यति ।

१. बालः पाठं पठति । ....... ........ ..........

२. छात्रः श्लोकं वदति । ....... ........ .........

३. सीता गीतं गायति । ........ ......... .......

४. पाचकः तण्डुलं पचति । ........ ......... .......

५. सेवकः धनं लभते । .......... ....... .........

६. अध्यापकः छात्रं श्लाघते । .......... ....... ......

७. सा प्रश्नं पृच्छति । ........ ...... ..........

८. अहं जलं पिबामि । ........ ...... ..........

९. धनिकः धनं ददाति । .......... ..... .........

१०. पिता वार्तां जानाति । .......... ..... .........

**III.** Answer the following questions.

१. कृषीवलः केन कर्षति ?

२. खगाः कैः डयन्ते ?

३. हारः कैः भवति ?

४. भीमः कया ताडयति ?

५. उत्तरदेशः काभिः विराजते ?

६. लक्ष्मणः केन सह अरण्यं गतवान् ?

७. त्वं कया लिखसि ?

**IV.** Fill in the blanks with the instrumental case forms of the words in brackets.

उदा - कृषिकः (आनन्दः) आनन्देन जीवति ।

१. छात्रः (सन्तोषः) ............ पाठं पठति ।

२. सेवकः (दण्डः) ................ शुनकं ताडयति ।

३. भक्तः (पुष्पाणि) ................ देवं पूजयति ।

४. सौचिकः (कर्तरी) ................ वस्त्रं कर्तयति ।

५. सन्दीपः (मित्राणि) ................ सह क्रीडति ।

६. नाविकः (नौका) ................ नदीं तरति ।

७. संन्यासी (स्तोत्राणि) ................ देवं तोषयति ।

८. छात्रः (अङ्गुली) ................ गणनां करोति ।

९. छात्राः (अध्यापिकाः) ................ सह सम्भाषन्ते ।

१०. रामः (राक्षसाः) ................ सह युद्धं कृतवान् ।

**V.** Translate the following sentences into Samskrit using indeclinables.

1. Cat is in the house.
2. Mother brought bananas for her daughter.
3. Once a sage lived in a forest.
4. That old woman speaks slowly.

**VI.** Match the following.

| | |
|---|---|
| १. यदा | अ. तर्हि |
| २. यद्यपि | आ. तथा |
| ३. यदि | इ. तावत् |
| ४. यावत् | ई. तदा |
| ५. यथा | उ. तथापि |

(**Note :** Compare your answers with those on the end of this book.)

## २. व्यावहारिकशब्दाः

### गृहविभागः

१. प्रासादः = Palace.
२. भोजनप्रकोष्ठः = Dining Hall.
३. शौचालयः = Toilet.
४. स्तम्भः = Pillar.
५. कूपः = Well.
६. अट्टः = Upper storey.
७. अन्तरट्टः = Cellar, Basement.
८. मृच्छदः = Tile.
९. छदिः = Roof.
१०. वृतिः = Fence.
११. वितर्दिः = Elevated place at the entrance/a balcony verandah.
१२. पाकशाला = Kitchen.
१३. द्वारशृङ्खला = Door - lock (Bolt).
१४. देहली = Threshold
१५. पूजागृहम् = Puja-room
१६. द्वारम् = Door.
१७. वातायनम् = Window/Ventilator.
१८. सोपानम् = Step.
१९. मुखद्वारम् = Gate.
२०. तोरणम् = Buntings.

## ३. प्रहेलिका

न तस्यादिः न तस्यान्तः मध्ये यः तस्य तिष्ठति ।
तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ।।

The stanza conveys two meanings. If one leads to confusion

the other helps us to find out the answer.

**Meaning 1 -** It has no beginning and no end. What is found in the middle is in you and in me. What is it ?

**Meaning 2 -** It has न in the beginning, न in the end and य in the middle. you have got it and I have it too. If you know what it is tell me. (**Answer** - See the Page No - 117 )

## ४. सङ्ख्याविषयाः

लक्ष्मीः

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते ।
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ।।

Salutations to you O' Goddess Mahāmāya ! you who are worshipped by even Gods. Salutations to you O' Goddess Mahālakshmī you who bear the conch, the discus and the mace in your hands.

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि ।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते ।।

O' Goddess Mahālakṣmi ! You are seated in padmāsana posture. The physical form of Ṣuprem Being, Supreme Goddess, the mother of the universe ! I bow to you.

## ५. संस्कृतवाङ्मयपरिचयः

Bhāsa occupies a distinguished position in Samskrit literature. Bhāsa (300 B.C.) has composed 13 plays. Among his plays Svapnavāsavadatta is very well known. This play depicts the life of king Udayana, queens Vāsavdattā and Padmāvati.

Some regions of Udayana's kingdom fell into the hands of his enemies. In order to regain them the help of Padmāvati's elder brother was necessary.

This help could be obtained only through Udayana's marriage

with Padmāvati. As long as queen Vāsavadattā was with him, Udayana's marriage with padmāvati was unthinkable. For the good of the country, Queen Vāsavadattā and minister Yaugandharāyaṇa thought out a plan. According to the plan, a rumour was spread that Vāsavadattā was burnt in a fire at Lāvāṇaka and the king was made to believe it. Yaugandharāyaṇa disguised himslef as an ascetic and left Vāsavadatta with Padmāvathi saying that she was his sister separated from her husband. Then the marrige between Udayana and Padmāvati was celebrated. One day thinking that Padmāvathi was asleep in the garden house Vāsavadattā sat by the side of the sleeping person. The person asleep was Udayana himself. He uttered the name of Vāsavadatta whom he saw in his dream. At once, Vāsavadattā left the place.

With the assistance of Padmāvati's brother, Udayana's army defeated the enemies. Thereafter when Yaugandharāyaṇa came to the court with Vāsavadattā, the king came to know about the plan made and executed by the minister and the queen. This, in brief, is the story of Svapnavāsavadatta.

The character of Vāsavadatta is noble. Yaugandharāyaṇa is a minister who is devoted to his country. The style of the play is very lucid. Even those who have an average knowledge of Samskrit can read and understand this drama.

## ६. कथा
## दैवमेव परम्

एकः अहितुण्डिकः आसीत् । सः सर्पान् गृहीत्वा जीवनं करोति स्म । एकदा सः एकं सर्पम् आनयति । सर्पं पेटिकायां स्थापयति च । प्रतिदिनं सर्पस्य प्रदर्शनं करोति । जीवनं करोति ।

कदाचित् अहितुण्डिकः अन्यं ग्रामम् अगच्छत् । तस्य पत्नी पुत्राः अपि अगच्छन् । सर्पः पेटिकायाम् एव बद्धः आसीत् । पञ्च दिनानि अभवन् । अहितुण्डिकः न आगच्छत् । सर्पस्य आहारः एव नास्ति । सः पेटिकातः

बहिः गमनाय प्रयत्नम् अकरोत् । सः बुभुक्षितः आसीत् । अतः शक्तिः नास्ति । विफलः अभवत् ।

तदा पेटिकासमीपे एकः मूषकः आगच्छत् । सः पेटिकाम् अपश्यत् । 'पेटिकायां भक्ष्याणि सन्ति' इति मूषकः अचिन्तयत् । 'रन्ध्रं करोमि' इति सः निश्चयम् अकरोत् । अनन्तरं सः रन्ध्रं कृत्वा अन्तः प्रवेशम् अकरोत् । मूषकः सर्पस्य मुखे एव अपतत् । सर्पः मूषकम् अखादत् । तेन रन्ध्रेण एव बहिः अगच्छत् ।

अहो ! सर्पस्य सौभाग्यम् । मूषकस्य दौर्भाग्यम् !!

## FATE PREVAILS

There was a snake-charmer. He caught serpents and made a living . One day he brings a serpent. He puts the serpent in a box. He exhibits the serpent everyday. He makes his living.

Once the snake-charmer went to another village. His wife and sons also went with him. The serpent was detained in the box. Five days passed. The snake-charmer did not come. The serpent had no food at all. The serpent tried to get out. It was hungry. Hence it had no energy. It failed (to come out).

Then a rat came near the box. It saw the box. It thought - "There are eatables in it." It decided to make a hole. It made a hole and entered it. The rat fell into the mouth of the serpent. The serpent ate the rat. Through that hole itself it went out. Ah ! good luck of the serpent. Bad luck for the rat !

**एतेषाम् उत्तरं लिखत ।**

१. अहितुण्डिकः कुत्र अगच्छत् ?

२. पेटिकासमीपं कः आगच्छत् ?

३. कः कस्य मुखे अपतत् ?
४. सर्पः कम् अखादत् ?

## ७. संस्कृतव्यवहारः

### कथम् How ?

Study the following questions and answers.

| Answer | Question |
|---|---|
| वातावरणं समीचीनम् अस्ति । | वातावरणं कथम् अस्ति ? |
| नाटकम् अत्युत्तमम् अस्ति । | नाटकं कथम् अस्ति ? |
| गायकः सम्यक् गायति । | गायकः कथं गायति ? |
| कूर्मः मन्दं चलति । | कूर्मः कथं चलति ? |
| विमानं शीघ्रं गच्छति । | विमानं कथं गच्छति ? |

Eg : **कथम्** found in the above questions is one of the seven interrogative words of Samskrit language. It means "How?" The reply to it is normally - well, good, suitable, surely, ... etc. Put ten questions using "**कथम्**" and find their answers for exercise.

### Rules for joining the letters

If any consonant of a particular group is placed in front of an Anusvara then the Anusvara is replaced by the fifth letter of the respective group.

अनुस्वारः (ं) + वर्गीयव्यञ्जनम्
⇩ ⇩
पञ्चमाक्षरम् + वर्गीयव्यञ्जनम्

Eg: **कं + कणम्** In this example there is a consonant of **क** group in front of ं (अनुस्वार) Hence the fifth letter (ङ्) of

कवर्ग - replaces अनुस्वार । Therefore it should be written as कङ्कणम् .

Learn carefully the following table for better understanding.

| Eg: | The letter in front of अनुस्वार | The fifth letter | Final formation |
|---|---|---|---|
| गं + गा | The III letter of क group | ङ् | गङ्गा |
| सं + चिका | The I letter of च group | ञ् | सञ्चिका |
| कं + टकम् | The I letter of ट group | ण् | कण्टकम् |
| अं + तः | The I letter of त group | न् | अन्तः |
| अं + बा | The III letter of प group | म् | अम्बा |

Some more examples.

**I.** १. टं + कनम् = टङ्कनम्  २. अं + चलम् = अञ्चलम्
३. सं + गीतम् = सङ्गीतम्  ४. अं + धः = अन्धः
५. सं + बं + धः = सम्बन्धः  ६. सं + ध्यं + गम् = सन्ध्यङ्गम्

**II.** 1. Mandam = मन्दम्  2. Saṅgaḥ = सङ्गः
3. Cañcalaḥ = चञ्चलः  4. Nandanaḥ = नन्दनः
5. Kampaḥ = कम्पः  6. Aṅkanī = अङ्कनी

**अभ्यासः -**

**I.** Write the following words in Devanāgarī following the above rule.

1. Kaṅkatam  2. Srīgandhaḥ
3. Santaḥ  4. Campakam
5. Bandhanam  6. Sañcinoti

**II.** Rewrite the following words according to the above rule.

१. संघः २. संपत् ३. शंका

४. अंजनम् ५. बंधः ६. शिंबा

(Answers given below)

## ८. सुभाषितम्

छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ।।

Trees stand in the Sun and give shade to others. Their fruits are also for others. Likewise good people, bear all hardship and bring welfare to others. They give to others whatever they have earned.

Answer to the riddle

नयनम् - The word has 'न' in the beginning and in the end, 'य' in the middle.

उत्तराणि

**I.** १. कङ्कतम् २. श्रीगन्धः ३. सन्तः ४. चम्पकम् ५ बन्धनम् ६. सञ्चिनोति

**II.** १. सङ्घः २. सम्पत् ३. शङ्का ४. अञ्जनम् ५.बन्धः ६. शिम्बा

# प्रवेशः- षष्ठः पाठः

## प्रश्नाः

1. Translate the following sentences into Samskrit.
   (Use future tense verbs only)
   1. Rama will go to town tomorrow.
   2. He will be happy tomorrow by giving away a gift.
   3. I will not come next year.
   4. She will be going to Delhi by flight.
   5. God blesses the devotee with a boon.
   6. People will not appreciate you here after.
   7. Farmer will make the mat using straws.
   8. I will make sentences with words.

2. Answer the following in Samskrit.
   १. व्याघ्रः कैः सञ्चरति ?
   २. मानवः काभ्यां चलति ?
   ३. रावणः कैः युद्धम् अकरोत् ?
   ४. मानवः काभ्यां कार्यं करोति ?
   ५. मानवः केन वदति ?
   ६. ब्रह्मा कैः वेदम् उच्चारयति ?
   ७. जनाः काभ्यां पश्यन्ति ?
   ८. शिवः कैः पश्यति ?

3. Answer the following.
   1. How many plays has Bhāsa composed ?
   2. Name Udayana's minister.
   3. What false news did the minister spread ?
   4. How are the trees comparable to noble people ?

(**Note:** Answers for the above exercises are given in the end of this book. After completing them, check your answers.)

# प्रवेशः - सप्तमः पाठः

।। मूढः परप्रत्ययनेयबुद्धिः ।।

A fool is guided by others' understanding.

## १. भाषाभ्यासः

**Verb**

(a) १. सः पाठं पठितवान् । = He studied the lesson.

२. एषः उत्तरं दत्तवान् । = This person(mas) gave the reply.

३. गजः सिंहं दृष्टवान् । = An elephant saw a lion.

४. पितृव्यः प्रश्नं पृष्टवान् । = Uncle asked a question.

५. बालः फलं खादितवान् । = A boy ate the fruit.

६. सः अद्य विलम्बेन उत्थितवान् । = He got up late today.

७. नारायणः साहाय्यं कृतवान् । = Nārāyaṇa helped.

८. गुरुः धर्मं बोधितवान् । = The teacher taught Dharma.

९. अहं मित्रैः सह क्रीडितवान् । = I played with friends.

१०. सर्पः बिलं प्रविष्टवान् । = A snake entered the hole.

११. भक्ताः देवं नतवन्तः । = Devotees bowed to God.

१२. बालकाः क्रीडाङ्गणं प्रति धावितवन्तः । = Boys ran to the playground.

१३. ग्रामीणाः कथां श्रुतवन्तः । = The villagers listened to the story.

१४. आरक्षकाः चोरं गृहीतवन्तः । = Police caught a thief.

१५. चोराः धनं चोरितवन्तः । = Thieves stole the money.

**(b)** १. बालिका गृहं गतवती । = The girl went home.

२. अध्यापिका व्याकरणं बोधितवती । = A lady-teacher taught grammar.

३. हरिणी तृणं खादितवती । = A deer (fem) grazed on the grass.

४. जननी बालं ताडितवती । = Mother beat the boy.

५. गृहिणी धेनुं पालितवती । = A house-wife reared a cow.

६. सा सत्यम् उक्तवती । = She spoke the truth.

७. तरुणी कथां लिखितवती । = A young lady wrote a story.

८. एषा पत्रं प्रेषितवती । = This person (fem) sent a letter.

९. महिलाः नाटकं दृष्टवत्यः । = Ladies saw a play.

१०. मयूर्यः नृत्यं कृतवत्यः । = Peacocks (fem) danced.

११. पाचिकाः शाकं कर्तितवत्यः । The cooks cut the vegetable.

१२. तरुण्यः देवं पूजितवत्यः । = Young ladies worshipped God.

१३. नार्यः वस्त्रं क्षालितवत्यः । = Women washed clothes.

१४. काः फलं नीतवत्यः ? = Who (fem-plu) carried away the fruit ?

१५. ताः पात्रं गृहीतवत्यः । = They (fem-plu) took/held a vessel.

In all the above sentences words ending in क्तवतु (तवत्) suffix have been used. The sentence in "a" section have words in masculine singular and plural numbers. In "b" section the sentences are in feminine singular and plural numbers.

## The rules concerning the suffix - क्तवतु

When क्तवतु is suffixed to a root, we get the forms like पठितवान्, गतवान् etc. This suffix is in the sense of past tense. This is a noun form. Hence it changes in all the three genders.

गम् + तवत् - गतवान् - (He) went
गतवती - (She) went
गतवत् - (It) went

In a sentence, the word with क्तवतु suffix takes the same gender and number as the subject.

| उदा - | ए.व. | ब.व. |
|---|---|---|
| | बालकः लिखितवान् । | बालकाः लिखितवन्तः । |
| | बालिका गतवती । | बालिकाः गतवत्यः । |

It is very easy to use a क्तवतु ending word instead of a verb of past tense. The same word can be used in all the three persons.

उदा - प्र.पु. - सः अक्रीडत् → सः क्रीडितवान् ।
म.पु. - त्वम् अक्रीडः → त्वं क्रीडितवान् ।
उ.पु. - अहम् अक्रीडम् → अहं क्रीडितवान् ।

Thus we can either use a past tense verbal form or a क्तवतु ending word. The meaning is the same in both the cases.

उदा - सः विद्यालयम् अगच्छत् / गतवान् ।
सा पाठम् अपठत् / पठितवती ।

### Cases

**चतुर्थीविभक्तिवाक्यानि** । (Dative case)

१. वैद्यः [1]रुग्णाय औषधं यच्छति । (रुग्णाय - to a patient)

२. धनिकः निर्धनाय धनं यच्छतु । (निर्धनाय - to the poor)

३. लेखकः [2]पत्रिकायै लेखं लिखतु ।

४. कवयः कीर्त्यै काव्यं लिखन्तु । (कीर्त्यै - for fame)

५. स्त्रियः उद्योगाय स्पर्धन्ताम् । (स्पर्धन्ताम् - let them compete)

६. ऐश्वर्यम् [3]अहङ्काराय भवति ।

७. शक्तिः परपीडनाय भवति ।

८. विद्या विवादाय मा भवतु ।

९. विद्या ज्ञानाय कल्पताम् । (कल्पताम् - let it become)

१०. लक्ष्मीः [4]पण्डिताय असूयति ।

११. त्वं चतुराय असूयसि ।

१२. नृपतयः [4]शत्रुभ्यः कुप्यन्तु ।

१३. पूतना हरये कुप्यति ।

१४. शिष्यः [4]गुरवे द्रुह्यति ।

१५. विक्रयिकः ग्राहकाय द्रुह्यति ।

(Seller cheats the customer)

१६. मोदकं [5]तुभ्यं रोचते वा ? (रोचते - is desirable)

१७. पुष्पाणि तरुणीभ्यः रोचन्ते ।

१८. संस्कृताभ्यासः मह्यं बहु रोचते ।

१९. गुरवे [6]नमः, नारायणाय नमः ।

२०. अग्नये नमः, श्रुत्यै नमः । (श्रुत्यै - to the Veda)

२१. प्रजाभ्यः [6]स्वस्ति, सर्वेभ्यः स्वस्ति, शिशुभ्यः स्वस्ति ।

२२. अतिथयः [7]गृहाय आगच्छन्तु । (अतिथयः गृहम् आगच्छन्तु ।)

२३. गोविन्दः नगर्यै गच्छति । (गोविन्दः नगरीं गच्छति ।)

२४. अहं ग्रामाय गच्छामि । (अहं ग्रामं गच्छामि ।)

## चतुर्थीविभक्तिरूपाणि

| | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| *अकारान्तः* | रामाय - रामेभ्यः | --- --- | वनाय वनेभ्यः |
| *आकारान्तः* | --- --- | रमायै - रमाभ्यः | --- --- |
| *इकारान्तः* | हरये - हरिभ्यः | मतये - मतिभ्यः | दध्ने - दधिभ्यः |
| *ईकारान्तः* | --- --- | लेखन्यै - लेखनीभ्यः | --- --- |
| *उकारान्तः* | गुरवे - गुरुभ्यः | धेनवे - धेनुभ्यः | मधुने - मधुभ्यः |
| *तकारान्तः* | भवते - भवद्भ्यः | सरिते - सरिद्भ्यः | --- --- |
| *नकारान्तः* | शास्त्रिणे - शास्त्रिभ्यः | --- --- | --- --- |

**सर्वनामशब्दाः**

| | पुं. | स्त्री. | नपुं. |
|---|---|---|---|
| दकारान्तः 'तद्'शब्दः | तस्मै - तेभ्यः | तस्यै - ताभ्यः | तस्मै - तेभ्यः |
| दकारान्तः 'एतद्'शब्दः | एतस्मै - एतेभ्यः | एतस्यै - एताभ्यः | एतस्मै - एतेभ्यः |
| मकारान्तः 'किम्'शब्दः | कस्मै - केभ्यः | कस्यै - काभ्यः | कस्मै - केभ्यः |
| दकारान्तः त्रिलिङ्गकः 'अस्मद्'शब्दः मह्यम् - अस्मभ्यम् | | | |
| दकारान्तः त्रिलिङ्गकः 'युष्मद्'शब्दः तुभ्यम् - युष्मभ्यम् | | | |

## Some rules pertaining to the Dative case -

1. The word denoting the person to whom something is given, gets the Dative case. Eg. The doctor gives medicine to the atient. To whom ? To the patient. (रुग्णाय)
2. The word denoting the purpose for which a certain action is done, gets the Dative case. Eg. Let the writer write for the

paper. Write for what ? For the paper. (पत्रिकायै)

3. The word denoting a thing into which another thing is transformed, gets the Dative case. Eg. Wealth turns into ego. Turns into what ? Into ego. (अहङ्काराय)
4. The word denoting the person or thing against whom or which anger, hatred or jealousy is shown, is in the Dative case.

   Eg: a. Lakshmi is jealous of the learned. Jealously against whom ? Against the learned. (पण्डिताय)

   b. Let the kings be angry with the enemies. (शत्रुभ्यः)

   c. The pupil bears malice against the teacher. (गुरवे)
5. When verbs meaning 'liking' are used, the word denoting the person to whom something is dear is in the Dative case. Eg: Sweet meats are to the liking of the girl. To whose liking ? To the girl's liking. (बालिकायै)
6. When the word नमः and स्वस्ति are used, the words denoting the object are in the Dative case.

   Eg: a. Salutations to the teacher. Salutations to whom ? To the teacher. (गुरवे)

   b. स्वस्ति प्रजाभ्यः Welfare to the subjects. Welfare to whom ? To the subjects. (प्रजाभ्यः)
7. When verbs meaning 'going' or 'coming' are used the words denoting the destination may be in the dative case or in the Accusative case.

   Eg: a. Let the guests come to the house. (गृहाय/गृहम्)

   b. The friend goes to the city. (नगरीम्/नगर्यै)

## उपसर्गाः - Prefixes

Study the following sentences.

१. सीता जलं **हरति** । = Sītā carries water.

२. भीमः दुर्योधनं **प्रहरति** । = Bhīma strikes Duryodhana.

३. सा पुण्यम् **आहरति** । = She brings merit.

४. रघुः यागम् **आहरति** । = Raghu performs a sacrifice.

५. रामः रावणं **संहरति** । = Rāma kills Rāvaṇa.

६. सर्वे चन्द्रिकायां **विहरन्ति** । = All enjoy in the moonlight.

७. गुरुः संशयं **परिहरति** । = The teacher clarifies the doubt.

८. सः **वर्तते** । = He exists.

९. कार्यक्रमः **प्रवर्तते** । = A programme goes on.

१०. एषः **प्रतिनिवर्तते** । = This person(masc) returns.

११. इयं **तिष्ठति** । = She stands.

१२. सा **प्रतिष्ठते** । = She starts off.

१३. लोकयानं जनान् **नयति** । = A bus carries people.

१४. रामः सीतां **परिणयति** । = Rāma marries Sītā.

१५. वाल्मीकिः रामायणं **प्रणयति** । = Vālmīki composes the Rāmāyaṇa.

१६. बालः **गच्छति** । = A Boy goes.

१७. गजः **आगच्छति** = An elephant Comes.

१८. वचनं **सङ्गच्छते** । = The saying holds good.

१९. धूलिः **उद्गच्छति** । = Dust rises up.

२०. जनकः विश्वामित्रं **प्रत्युद्गच्छति** । = Janaka welcomes (receives) Viśvāmitra.

In the above sentences हरति, वर्तते, तिष्ठति, नयति, गच्छति are the only verbs used. You must note that the meaning of these verbs have changed with prefixes प्र, वि etc.

These prefixes that change the meaning of the धातु, are called उपसर्गाः । There are 22 prefixes. They are -

प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि,
आङ्, नि, अधि, अभि, सु, उत्, प्रति, परि, अपि, अति, उप ।

Note the following points referring to उपसर्गाः ।

- उपसर्ग is prefixed to a verb.
  Eg: गच्छति → आगच्छति ।
- Sometimes the meaning of a root is changed with a prefix.
  Eg - हरति - carries, प्रहरति - strikes, beats.
- Roots change from Ātmanepada to Parasmaipada and vice versa with a prefix some times.
  Eg - तिष्ठति → प्रतिष्ठते । रमते → विरमति
  (प.प → आ.प) (आ.प → प.प)
- More than one prefix also may be joined to a verb.
  Eg - गच्छति → आगच्छति → प्रत्यागच्छति ।
  (प्रति + आ + गच्छति)
- Special attention is necessary when there is a prefix in a verb in the past tense.
  Eg - अहरत् → प्र + अहरत् = प्राहरत् । (correct)
  प्रहरति - अप्रहरत् - (incorrect)

## अभ्यासः

**I.** Change the following sentences into Plural number.

उदा - सः पाठं पठितवान् । ते पाठं पठितवन्तः ।

१. सः क्रीडितवान् । .................. .................. ।

२. सः ग्रन्थालयं गतवान् । ............. ...... .......... ।
३. बालः पुस्तकं नीतवान् । ............. ................. ।
४. बालिका फलं भक्षितवती । ............. .............. ।
५. नृपः राज्यं रक्षितवान् । ............. ....... .......... ।
६. रुग्णः औषधं सेवितवान् । ............. ............... ।
७. अहं चित्रं दृष्टवान् । ............. .......... .......... ।
८. अहं पत्रं प्रेषितवान् । ............ ......... ........... ।
९. त्वं पाठं लिखितवान् । ............. .................. ।
१०. त्वं धर्मं पालितवान् । ............. ......... ........... ।

**II.** Change the following sentences into Singular number.

१. वानराः फलं खादितवन्तः । .......... .......... ......
२. अध्यापकाः ताडितवन्तः । .......... .......... ..........
३. ललनाः गीतं गीतवत्यः । .......... .......... ..........
४. ते वाक्यम् उक्तवन्तः । .......... .......... ..........
५. वयं कथां श्रुतवन्तः । .......... .......... ..........
६. यूयं चलच्चित्रं दृष्टवन्तः । .......... .......... .........
७. ताः चित्रं रचितवत्यः । .......... .......... ..........
८. वृद्धाः क्षीरं पीतवन्तः । .......... .......... ..........

**III.** Rewrite the following sentences with **क्तवतु** ending words.

उदा - सः अधावत् - सः धावितवान् ।

१. ते धर्मम् अपालयन् । .......... .......... ............
२. धनिकः धनम् अददात् । .......... .......... ........
३. युवकाः धनम् अगणयन् । .......... .......... ..........
४. दुष्टाः जनान् अपीडयन् । .......... .......... ...........
५. बालाः शिलाखण्डम् अक्षिपन् । ........ .......... .......
६. ताः दुष्टान् अनिन्दन् । .......... .......... ..........

७. ते दुरभ्यासं अत्यजन् । .......... .......... ...........

८. व्याघ्राः पशून् अमारयन् । .......... .......... ..........

**IV.** Answer the following questions.

१. लेखकः कस्यै लेखं लिखतु ?

२. लक्ष्मीः कस्मै असूयति ?

३. विक्रयिकः कस्मै द्रुह्यति ?

४. संस्कृताभ्यासः कस्मै रोचते ?

५. गोविन्दः कस्यै गच्छति ?

६. पुष्पाणि काभ्यः रोचन्ते ?

**V.** Separate the Prefix in the following verbs.

उदा - उपविशति = उप + विशति ।

प्रत्यगच्छत् = प्रति + अगच्छत् ।

१. उपदिशति  २. परिहरति  ३. प्रभवति  ४. निर्गच्छतु

५. निवर्तते  ६. अभ्यूहते  ७. आलोकते  ८. उत्प्रेक्षते

९. परीक्षते  १०. उपाहरत्  ११. उल्लङ्घते  १२. प्रत्यागच्छत् ।

**(Note :** Compare your answers with those on the end of this book and ascertain their correctness.)

## २. व्यावहारिकशब्दाः

### गृहोपकरणानि

१. आसन्दः = Chair  २. करदीपः = Torch

३. तालः = Lock  ४. कटः = Mat

५. दण्डदीपः = Tubelight  ६. पिञ्जः = Switch

७. समीकरः = Iron Box  ८. दर्पणः = Mirror

९. स्यूतः = Bag  १०. नलिका = Tap

११. अग्निपेटिका = Matchbox  १२. कुञ्चिका = Key

१३. दूरवाणी = Telephone
१४. शय्या = Bed
१५. कपाटिका = Almirah
१६. जवनिका = Curtain
१७. अवकरिका = Dustbin
१८. पेटिका = Box
१९. चुल्ली = Oven/stove
२०. पुष्पाधानी = Flower-vase
२१. सम्मार्जनी = Broom
२२. उपधानम् = Pillow
२३. पादशोधनम् = Foot rug
२४. व्यजनम् = Fan
२५. कङ्कतम् = Comb
२६. छत्रम् = Umbrella

## ३. प्रहेलिका

दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः ।
गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ।।

Without teeth it eats stone; without life it speaks much; even if possessed with wealth of virtues it moves on with others' feet.

What could that be ? Can you guess ?

(**Answer** - See the Page No - 136)

## ४. सङ्ग्राह्यविषयाः

### सूर्यः

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ।।

One should always pray to Nārāyaṇa who shines at the centre of the Sun's orb. He is seated on a lotus and is wearing armlets, ear-ornaments shaped like crocodile, a crown, a garland (necklace), a conch and a discus and shines with a golden form.

तं सूर्यं जगतां नाथं ज्ञानविज्ञानमोक्षदम् ।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम् ।।

I Bow to that Sun-God who is the Lord of the universe, bestower of knowledge of the Ultimate, scientific knowledge and salvation and is the remover of worst sins.

## ५. संस्कृतवाङ्मयपरिचयः

You know that Kāvya is of three kinds - Gadya, Padya, and Campū. Kāvya can be classified in another way also.

१. दृश्यकाव्यम् and २. श्रव्यकाव्यम्

Dṛśya kāvya is one which can be presented on stage and watched (drama, etc.). Śravya kāvya is one which is to be heard (or read) and enjoyed (Mahākāvyas etc.).

What is called drama in English or **नाटक** in other Indian languages, is **रूपक** in Samskrit. There are ten varieties of Rūpakas. Of them Nātaka is one.

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा दश ।।

These are ten types of Rūpakas.

Well known Rūpakas and their authors -

| | |
|---|---|
| १. अभिज्ञानशाकुन्तलम् | कालिदासः |
| २. उत्तररामचरितम् | भवभूतिः |
| ३. स्वप्नवासवदत्तम् | भासः |
| ४. वेणीसंहारः | भट्टनारायणः |
| ५. मृच्छकटिकम् | शूद्रकः |

## KĀVYAS

In Samskrit literature, poetic compositions (काव्यानि) occupy the lofty position which the śāstras occupy. There are many

poems in Samskrit. The Rāmāyaṇa is the first epic poem(Ādikāvya). All Mahākāvyas are metrical compositions.

Some kāvyas and their authors are mentioned below.

| **पञ्च महाकाव्यानि** | **कविः** |
|---|---|
| १. रघुवंशम् | कालिदासः |
| २. कुमारसम्भवम् | कालिदासः |
| ३. किरातार्जुनीयम् | भारविः |
| ४. शिशुपालवधम् | माघः |
| ५. नैषधीयचरितम् | श्रीहर्षः |
| **प्रसिद्धानि गद्यकाव्यानि** | |
| १. कादम्बरी | बाणः |
| २. वासवदत्ता | सुबन्धुः |
| ३. दशकुमारचरितम् | दण्डी |
| **प्रसिद्धानि चम्पूकाव्यानि** | |
| १. चम्पूरामायणम् | भोजदेवः |
| २. चम्पूभारतम् | अनन्तभट्टः |
| ३. विश्वगुणादर्शचम्पूः | वेङ्कटाध्वरिः |
| ४. नीलकण्ठविजयचम्पूः | नीलकण्ठदीक्षितः |
| ५. यशस्तिलकचम्पूः | सोमदेवः |

## ६. कथा

### न्यायश्रद्धा

पूर्वं सगरः नाम नृपः आसीत् । तस्य पत्नीद्वयम् आसीत् । किन्तु एकः अपि पुत्रः न आसीत् । अतः सगरः दुःखितः अभवत् । अनन्तरं सः एकं मुनिवरं सेवितवान् । मुनिवरः सन्तुष्टः अभवत् । सः वरम् अयच्छत् । सगरस्य ज्येष्ठपत्नी एकं पुत्रम् अलभत । तस्य नाम असमञ्जः । कनिष्ठपत्नी

षष्टिसहस्त्रं पुत्रान् अलभत । कालः अतीतः । सर्वे पुत्राः अवर्धन्त । राजकुमारः असमञ्जः बहु दुष्टः आसीत् । सः विनोदार्थं नगरस्य अन्यान् बालान् जले क्षिपति स्म । म्रियमाणान् तान् दृष्ट्वा आनन्देन हसति स्म च । एवम् असमञ्जः अनेकान् बालान् अमारयत् ।

ततः जनाः दुःखिताः अभवन् । ते नृपस्य समीपम् आगच्छन् । असमञ्जस्य दुराचारम् अवदन् । तदा नृपः सचिवान् आह्वयत् । पुत्रस्य विषयम् अवदत् । ''इदानीं किं करोमि ?'' इति तान् अपृच्छत् । सचिवाः अवदन् - ''प्रजापीडकः असमञ्जः भवता राज्यतः निष्कासितः भवतु'' इति । नृपः सचिवानां निर्णयम् अङ्गीकृतवान् । पुत्रम् अपि असमञ्जं सः निष्कासितवान् । अहो ! न्याये नृपस्य श्रद्धा !

अतः सज्जनाः वदन्ति 'त्यजेदेकं कुलस्यार्थे' इति ।

## Faith in Righteousness

Formerly there was a king by name Sagara. He had two wives. But he had no sons. Hence Sagara was unhappy. Then he served an ascetic. The ascetic was pleased. He gave a boon. Sagara's first wife got a son. His name was Asamañja. The second wife begot 60,000 children. Time passed. All the children grew up. Prince Asamañja was extremely wicked. For fun, he used to throw the children of the city into water. Seeing them die he used to laugh with joy. Thus he killed many children.

People were dejected. They approached the king. They reported that Asamañja was wicked. Then the king called his ministers and told them about his son. He asked them "what should I do now ?" The ministers said - "Banish Asamañja the oppressor of people from the kingdom." The king accepted their decision. He banished his own son Asmañja. Oh ! how great is

the king's faith in righteousness !

Therefore the wise say 'in the interest of the family, one (child - an indiscriminate person) may be sacrificed.'

**एतेषाम् उत्तरं लिखत ।**

१. नृपस्य नाम किम् ?

२. राजकुमारः कीदृशः आसीत् ?

३. जनाः किमर्थं दुःखिताः अभवन् ?

४. कः निर्णयम् अयच्छत् ?

५. सज्जनाः किं वदन्ति ?

## ७. संस्कृतव्यवहारः

a) Read the following conversation.

शिक्षकः - ग्रन्थालये के के सन्ति ?

छात्रः - ग्रन्थालये ग्रन्थपालकः अस्ति । बालकाः महिलाः वृद्धाः च सन्ति ।

शिक्षकः - भारतदेशे महापुरुषाः के के आसन् ?

छात्रः - भारतदेशे रामकृष्णपरमहंसः आसीत् । समर्थरामदासः आसीत् । अहल्याबायी आसीत् । पाण्डवाः आसन् । ऋषयः च आसन् ।

शिक्षकः - गते भानुवासरे भवन्तः कुत्र आसन् ? कः कार्यक्रमः आसीत् ?

छात्रः - गते भानुवासरे वयं रवीन्द्रकलाक्षेत्रे आस्म । वार्षिकोत्सवः आसीत् ।

शिक्षकः - भवान् इदानीं कुत्र अस्ति ? सर्वे छात्राः कुत्र सन्ति ?

छात्रः - इदानीम् अहं शालायाम् अस्मि । वयं सर्वे शालायां स्मः ।

Learn the following conjugations of अस् root.

b) Some words commonly used in Samskrit conversation can be learnt from the following sentences.

१. **अपि** - Also

१. कृष्णः फलं खादति । रामः अपि फलं खादति ।

२. सः कथां पठति । सः कविताम् अपि पठति ।

२. **इति** - In this way (Thus)

१. 'सत्यं वद । धर्मं चर ।' इति तैत्तिरीयोपनिषत् वदति ।

२. 'उत्तिष्ठत जाग्रत' इति स्वामी विवेकानन्दः वदति ।

३. **एव** - Only

१. सः अन्नम् एव खादति ।

२. सा गृहम् एव गतवती ।

४. **अतः** - Therefore, So

१. अस्वास्थ्यम् अस्ति । अतः सः वैद्यालयं गच्छति ।

२. समयः नास्ति । अतः गृहं न गच्छामि ।

५. **च** - And

१. विवेकः आनन्दः च गच्छति ।

२. बालः संस्कृतं गणितं विज्ञानं च पठति ।

६. **यतः** Because/since

१. सः उपवासम् आचरति, यतः अद्य एकादशी ।

२. राधा रोदिति, यतः तस्याः उदरवेदना अस्ति ।

Construct your own sentences using the words above.

**अभ्यासः -**

**I.** Change the following sentences into past tense.

१. दिलीपः प्रसिद्धः राजा अस्ति । २. अहं काश्याम् अस्मि ।
३. बहवः ऋषयः भारते सन्ति । ४. वयं नगरे स्मः ।

**II.** Change the following sentences into present tense.

१. मम गृहे दश धेनवः आसन् । २. अद्य महती वृष्टिः आसीत् ।
३. अहं नर्तिका आसम् । ४. वयं बेलूरुनगरे आस्म ।

**III.** Translate the following sentences into Samskrit.

1. A rich man also experiences difficulty.
2. Monkeys live only on the tree.
3. He did not say "It is here only".
4. I study and work also.
5. I have interest, so I go to the assembly (conference).
6. There are no students in the school, because today is a holiday.

(Answers given below)

---

**उत्तराणि -**

(Here only the verbs are given. You write the complete sentence.)

**I.** १. आसीत्, २. आसम्, ३. आसन्, ४. आस्म ।

**II.** १. सन्ति, २. अस्ति. ३. अस्मि, ४. स्मः ।

**III.** १. धनिकः अपि कष्टम् अनुभवति । २. वानराः वृक्षे एव वसन्ति । ३. 'अत्र एव अस्ति' इति सः न उक्तवान् । ४. अहम् अध्ययनं सेवां च करोमि । ५. आसक्तिः अस्ति, अतः सभां गच्छामि । ६. शालायां छात्राः न सन्ति, यतः अद्य विरामः ।

# ८. सुभाषितम्

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।।

An indiscriminate individual must be kept away in the interest of the family. If it is in the interest of the village a family must be sacrificed. A village may be abondoned for the sake of the country. One must leave the world for self realisation.

**Answer to the riddle**

पादरक्षा - Sandal

The word 'Guṇa' has two meanings :-

1. **Qualities** like pain, pleasure, etc.
2. Sandals have **thread** stiches.

Therefore they are regarded as posessing 'Guṇas.'

# प्रवेशः- सप्तमः पाठः
## प्रश्नाः

1. Translate into Samskrit the following sentences using words ending in क्तवतु suffix.
   1. Boys sang a song.
   2. People went home.
   3. A Snake caught a mouse.
   4. They (fem.) wrote the answer.
   5. Women bought a saree.
   6. A girl played in the morning.
2. Correct the mistakes in the following sentences.
   १. बालकः पठितवन्तः ।
   २. युवतयः गतवन्तः ।
   ३. सा उक्तवान् ।
   ४. मोदकं रामस्य रोचते ।
   ५. कुरूपिणी सुन्दरीम् असूयति ।
3. Answer the following questions.
   (a) How many Prefixes are there ?
   (b) What change has occurred by the addition of the prefi in the word 'प्रहरति' ?
   (c) What is wrong in 'अप्रहरत्' ?
   (d) What is the speciality in प्रतिष्ठते ?

(**Note:** Answers for the above exercises are given in the end of this book. After completing them, check your answers.)

# प्रवेशः - अष्टमः पाठः

।। ज्ञातसारोऽपि खल्वेकः [१]सन्दिग्धे कार्यवस्तुनि ।।

However learned a person may be, he gets doubts when he undertakes a work.

## १. भाषाभ्यासः

### Verb

Study the following sentences.

१. अहं **क्रीडित्वा** पठामि । = I study after playing.

२. सः **स्थित्वा** गायति । = He sings standing.

३. अम्बा पाकं **कृत्वा** परिवेषयति । = Mother serves after cooking.

४. चोरः आरक्षकं **दृष्ट्वा** धावितवान् । = A thief ran away after seeing the police.

५. एषा पाठं **पठित्वा** निद्रां करोति । = This person(fem) sleeps after reading the lesson.

६. सः शालां **गत्वा** पठति । = He studies after going to school.

७. अहं ग्रन्थं **दृष्ट्वा** लिखामि । = I write seeing the book.

८. अहं क्षीरं **पीत्वा** निद्रां करोमि । = I sleep after drinking milk.

---

[१]सन्दिग्धे - This is a verb. The meaning is "doubts or suspects."

९. सः **स्नात्वा** पूजां करोति । = He worships after bathing.

१०. अहम् अर्थं **ज्ञात्वा** वदामि । = I speak after knowing the meaning.

११. ते शब्दं **श्रुत्वा** भीतवन्तः । = They were scared after hearing the sound.

१२. बालाः अर्थं **पृष्ट्वा** ज्ञातवन्तः । = Children understood after asking for the meaning.

१३. भक्ताः देवं **स्मृत्वा** पूजयन्ति । = Devotees worship thinking of God.

१४. बालाः **पतित्वा** रुदन्ति । = Children cry after falling (down).

१५. त्वं छत्रं **गृहीत्वा** गच्छ । = You go taking the umbrella (with you).

१६. चोरः धनं **चोरयित्वा** नीतवान् । = A thief stole the money and took it away.

१७. त्वं माम् **उक्त्वा** गच्छ । = You tell me and go.

१८. ते फलं **खादित्वा** तृप्तिं प्राप्तवन्तः । = They felt satisfied after eating the fruit.

१९. बालकाः देवं **वन्दित्वा** गतवन्तः । = Boys went away after bowing to God.

In the above sentences words with क्त्वा (त्वा) suffix are used (Block lettered). When क्त्वा is suffixed to a root these forms are obtained.

उदा - क्रीड् + त्वा - क्रीडित्वा
पठ् + त्वा - पठित्वा

## Note :

When two actions are done in succession by a single agent (कर्ता), क्त्वा suffix is added to the former root.

उदा - बालकः क्रीडति । बालकः पठति । = बालकः क्रीडित्वा पठति ।

Here, the boy does two actions namely playing and reading. By

adding **क्त्वा** to the first root, we get the form **क्रीडित्वा ।**
**सुरेशः क्रीडति । रमेशः पठति ।** Here the subjects are different for both the actions. Hence, we cannot use **क्त्वा**. We should not say **सुरेशः क्रीडित्वा रमेशः पठति ।**

Some forms of the verbs change by the addition of **क्त्वा ।**

| | |
|---|---|
| पृच्छति - पृष्ट्वा | वहति - ऊढ्वा |
| गच्छति - गत्वा | यच्छति - दत्त्वा |
| तिष्ठति - स्थित्वा | नयति - नीत्वा |
| गायति - गीत्वा | स्मरति - स्मृत्वा |

Study the following sentences.

१. आरक्षकः चोरम् **अनुसृत्य** गतवान् । = A police went chasing the thief

२. चोरः धनम् **अपहृत्य** धावितवान् । = A thief ran away after stealing the money.

३. शास्त्रम् अभ्यस्य सः पण्डितः अभवत् । = He became a learned man after studying the lore.

४. भक्तः देवाय पुष्पाणि **समर्प्य** गतवान् । = The devotee went away after offering flowers to God.

५. सेवकः वृक्षात् **अवतीर्य** गतवान् । = Servant went away after climbing down from the tree.

६. त्वं रज्जुम् **आकृष्य** पश्य । = You pull the rope and see.

७. त्वं दीपं **निर्वाप्य** शयनं कुरु । = You sleep after putting off the lamp.

८. अहं सन्मार्गम् **आश्रित्य** गच्छामि । = I get on following the right path.

९. सः यन्त्रम् **उत्पाद्य** विक्रयणं करोति । = He manufactures the machine and sells it.

१०. बालकः **उत्थाय** वदति । = The boy gets up and speaks.

११. सः **उपविश्य** पठति । = He studies sitting down.

१२. कर्मकरी पात्रं **प्रक्षाल्य** गतवती । = The maid servant went away after washing the vessel.

१३. अर्चकः देवम् **अलङ्कृत्य** पूजयति । = The priest decorates (the idol of God) and worships God.

१४. जनाः क्षीरम् **उष्णीकृत्य** पिबन्ति । = People drink milk after heating it.

१५. निर्धनः धनं **व्ययीकृत्य** रोदिति । = A poor man cries after spending money.

In the above sentences, words with ल्यप् suffix are given in block letters. They are called ल्यबन्त words.

The क्त्वान्त word for 'हरति' is 'हृत्वा' । But क्त्वा becomes ल्यप् (य) when a verb has a prefix.

Eg. हरति → हृत्वा → (क्त्वा suffix)
अपहरति → अपहृत्य → (ल्यप् suffix)

You know that the first verb takes क्त्वा when the same subject is performing two actions. ल्यप् is also added in the same sense. It is suffixed only when a root is having a prefix.

Some examples -

परिहरति → परिहृत्य
समर्पयति → समर्प्य
आरोहति → आरुह्य
उपविशति → उपविश्य
प्रक्षालयति → प्रक्षाल्य

## Cases

Sentences of Ablative case.

१. वृक्षात् पर्णम् अपतत् । = A leaf fell from the tree.

२. वृक्षेभ्यः फलानि पतन्ति । = Fruits fall from trees.

३. ग्रामीणः ग्रामात् आगच्छति । = A villager comes from the village.

४. देवताः स्वर्गात् आगच्छन्ति । = Gods come from heaven.

५. निर्झरः पर्वतात् प्रवहति । = A stream flows from the mountain.

६. गौरी आलस्यात् न पठति । = Due to laziness Gowri does not study.

७. नार्यः आतपात् ग्लायन्ति । = Women become pale due to Sun's heat.

८. तरुण्यः कौमुद्याः नन्दन्ति । = Young ladies enjoy because of moon light.

९. जन्तवः सूर्यात् जीवन्ति । = Animals live because of the Sun.

१०. हरिणः व्याघ्रात् त्रस्यति । = A deer is scared of the tiger.

११. गजाः सिंहात् त्रस्यन्ति । = Elephants fear the lion.

१२. नार्यः सर्पात् अत्रस्यन् । = Women were scared of the snake.

१३. अहं चोरेभ्यः अत्रस्यम् । = I got scared of robbers.

१४. भरतः लक्ष्मणात् पूर्वः । = Bharata was (born) before Lakṣmaṇa.

१५. लक्ष्मणः शत्रुघ्नात् पूर्वः । = Lakṣmaṇa was (born) before śatṛghna.

१६. वैशाखः चैत्रात् परः । = Vaiśākha is after Chaitra.

१७. भीमः युधिष्ठिरात् परः । = Bhīma is after Yudhiṣṭhira.

१८. आम्रफलं दाडिमात् श्रेष्ठम् । = Mango is superior to pomogranate.

१९. महाभारतं रामायणात् विस्तृतम् । = Mahābhārata is vaster than Rāmāyaṇa.

२०. कालिदासः भवभूतेः श्रेष्ठः । = Kālidāsa is greater than Bhavabhūti.

**पञ्चमीविभक्तिरूपाणि**

| | *पुंलिङ्गे* | *स्त्रीलिङ्गे* | *नपुंसकलिङ्गे* |
|---|---|---|---|
| *अकारान्तः* | रामात् - रामेभ्यः | ........ ........ | वनात् - वनेभ्यः |
| *आकारान्तः* | ..... ..... | रमायाः - रमाभ्यः | ..... ..... |
| *इकारान्तः* | हरेः - हरिभ्यः | मतेः - मतिभ्यः | दध्नः - दधिभ्यः |
| *ईकारान्तः* | ..... ..... | लेखन्याः - लेखनीभ्यः | .... ..... |
| *उकारान्तः* | भानोः - भानुभ्यः | धेन्वाः - धेनुभ्यः | मधुनः - मधुभ्यः |
| *ऋकारान्तः* | पितुः - पितृभ्यः | मातुः - मातृभ्यः | ..... ..... |

**सर्वनामशब्दाः**

| | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| दकारान्तः 'तद्'शब्दः | तस्मात्-तेभ्यः | तस्याः-ताभ्यः | तस्मात्-तेभ्यः |
| दकारान्तः 'एतद्'शब्दः | एतस्मात्-एतेभ्यः | एतस्याः-एताभ्यः | एतस्मात्-एतेभ्यः |
| मकारान्तः 'किम्'शब्दः | कस्मात्-केभ्यः | कस्याः-काभ्यः | कस्मात्-केभ्यः |
| दकारान्तः त्रिलिङ्गकः 'अस्मद्'शब्दः - मत् - अस्मत् | | | |
| दकारान्तः त्रिलिङ्गकः 'युष्मद्'शब्दः - त्वत् - युष्मत् | | | |

## Some rules pertaining to the Ablative case

Generally when separation is denoted the ablative is used. In the sentence 'वृक्षात् पर्णं पतति', the leaf is separated from

the tree. So **वृक्ष** is in the ablative.

1. The words denoting the cause of fear used with verbs expressing 'fear', are in the Ablative case. Eg. **हरिणः व्याघ्रात् बिभेति** । The deer is afraid of the tiger, **व्याघ्रात्** is in the Ablative case.
2. When an object is separated from another the word denoting the thing from which something is separated and which is comparatively stable(the first substratum of the action of separation), gets the Ablative case. Eg - **वृक्षात् पर्णं पतति** ।

   Here **वृक्ष** is the first substratum of the action of separation between **वृक्ष** and **पर्णं** । Hence it is in the Ablative case.
3. When the adjectives (**गुणवाचकाः**) **पूर्वः** (earlier) **परः** (later) **श्रेष्ठः** (superior) etc. are used, the words denoting that with respect to which something is earlier, later or superior get the Ablative case.

   Eg - Bharata is elder to Lakṣmaṇa. To whom ? To Lakṣmaṇa (**लक्ष्मणात्**)

   Eg - **कालिदासः भवभूतेः श्रेष्ठः** । Kalidasa is superior to Bhavabhuti. Superior to whom ? To Bhavabhuti (**भवभूतेः** ।)

## तः - From

In the sense of ablative case **'तः'** is added to words.

Eg - रामात् / रामतः, हरेः / हरितः, नद्याः / नदीतः, गुरोः / गुरुतः,
**'रामात्' 'रामतः'** There is no difference in meaning between these two forms.

Study attentively the following sentences for better acquaintance.

१. वृक्षात् पर्णं पतति । → वृक्षतः पर्णं पतति ।

२. बालः शालायाः आगतवान् । → बालः शालातः आगतवान् ।

३. शाखायाः फलं पतितम् । → शाखातः फलं पतितम् ।

४. भक्तेन देव्याः वरः प्राप्तः । → भक्तेन देवीतः वरः प्राप्तः ।

५. सः सरस्वत्याः पुस्तकं स्वीकृतवान् । → सः सरस्वतीतः पुस्तकं स्वीकृतवान् ।

## अभ्यासः

**I. (a)** Write the क्त्वान्त forms of the following verbs.

Eg - पठति - पठित्वा ।

१. गच्छति ......... । २. ध्यायति ........ ।

३. स्मरति .......... । ४. लिखति ......... ।

५. करोति .......... । ६. श्रृणोति .......... ।

७. मिलति .......... । ८. नयति ........... ।

९. क्रीडति ......... । १०. हरति .......... ।

**(b)** Write the ल्यबन्त forms of the following verbs.

उदा - परिहरति - परिहृत्य ।

१. अवगच्छति .......... । २. परिणयति ............ ।

३. उपविशति ........... । ४. उपदिशति ............ ।

५. आगच्छति .......... । ६. आकर्षति ............ ।

७. निर्दिशति ........... । ८. निर्माति .............. ।

९. अपहरति ........... । १०. अपसरति ............ ।

**II. (a)** Combine the two sentences using **क्त्वान्त** forms.

Eg - सः पठति । सः गच्छति ।

सः पठित्वा गच्छति ।

१. रामः स्नाति । देवं पूजयति ।

............ ........... ............ ...........

२. हरिः धावति । लक्ष्यं प्राप्नोति ।

............ ........... ............ ...........

३. गुरुः पठति । अर्थं विवृणोति ।

............ ........... ............ ...........

४. सः वाक्यं लिखति । कण्ठस्थीकरोति ।

............ ........... ............ ...........

५. छात्रः वाक्यं स्मरति । वदति ।

............ ........... ............ ...........

६. सा गुरुं पृच्छति । अर्थं जानाति ।

............ ........... ............ ...........

७. सेवकः आदेशं श्रृणोति । तदनुगुणम् आचरति ।

............ ........... ............ ...........

८. गृहस्थः पञ्चाङ्गं पश्यति । तिथिं जानाति ।

............ ........... ............ ...........

**(b)** Combine the two sentences using **ल्यबन्त** form.

उदा - सः उपविशति । ध्यानं करोति ।

सः **उपविश्य** ध्यानं करोति ।

१. माता जलं परिवेषयति । अन्नं परिवेषयति ।

............ ........... ............ ...........

२. सेवकः रज्जुम् आकर्षति । नयति ।

............ ........... ............ ...........

३. दुष्टः कलहम् उत्पादयति । सन्तोषम् अनुभवति ।

............ ........... ............ ...........

४. कर्मकरी पात्राणि प्रक्षालयति । गृहं गतवती ।

............ ........... ............ ...........

५. त्वम् उत्तिष्ठ । नमस्कारं कुरु ।

............ ........... ............ ...........

६. त्वं मम गृहम् आगच्छ । विपणिं गच्छ ।

............ ........... ............ ...........

७. कपिः वृक्षम् आरोहति । इतस्ततः पश्यति ।

............ ........... ............ ...........

८. अहं ग्रन्थं परिशीलयामि । मित्राय प्रतिददामि ।

............ ........... ........... ...........

**III.** Write the ablative case forms of the following words.

उदा - पर्वतः - पर्वतात्

१. नगरम् ....... । २. आकाशः ........ ।

३. लता ........ । ४. नदी ....... ।

५. वृक्षाः ....... । ६. गृहाणि ........ ।

७. चोराः ........ । ८. व्याघ्राः ......... ।

९. शाखा ........ । १०. कौमुदी ...... ।

**IV.** Answer the following questions is Samskrit.

१. केभ्यः फलानि पतन्ति ?

२. ग्रामीणः कुतः आगच्छति ?

३. तरुण्यः कस्याः नन्दन्ति ?

४. गजाः कस्मात् त्रस्यन्ति ?

५. नार्यः कस्मात् अत्रस्यन् ?

६. भीमः कस्मात् परः ?

७. चैत्रः कस्मात् पूर्वः ?

८. महाभारतं कस्मात् विस्तृतम् ?

**(Note :** Compare your answers with those on the end of this book and ascertain their correctness.)

## २. व्यावहारिकशब्दाः

**फलानि**

१. आम्रफलम् = Mango २. पनसफलम् = Jackfruit

३. कदलीफलम् = Banana ४. सेवफलम् = Apple

५. द्राक्षाफलम् = Grapes ६. नारङ्गफलम् = Orange

७. जम्बूफलम् = Rose apple ८. खर्जूरः = Dates

९. कलिङ्गम् = Water - melon १०. मधुकर्कटी = Papaya

११. भल्लातकफलम् = Cashew nut.

**पुष्पाणि**

१. कमलम् = Lotus.
२. जपाकुसुमम् = Hibiscus.
३. मुकुलम् = bud
४. जाती = Jasmine variety.
५. मन्दारः = Coral flower.
६. पाटलम् = Rose.
७. सेवन्तिका = Sevantika
८. मल्लिका = Jasmine.
९. पारिजातम् = Parijatha
१०. शङ्खपुष्पम् = Conchflower
११. केतकी = Ketaka flower
१२. चम्पकपुष्पम् = Champak flower.

## ३. प्रहेलिका

अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ।।

Without legs it moves far. It is full of letters but not a scholar. It speaks distinctly without mouth. The one who knows it is a scholar.

(**Answer** - See the Page No - 155 )

## ४. सङ्ग्राह्यविषयाः

### पार्वती

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ।।

Salutation to you O' Goddess Pārvati. You are the auspicious one for all auspicious occasions. You are Śiva's consort and can fulfil all desires. You protect all those who take refuge in you.

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ।।

O ! Annapūrṇa, who is always Complete (perfect) O! Pārvati, the beloved of Śiva, you bestow on me knowledge and asceticism.

# ५. संस्कृतवाङ्मयपरिचयः

## अभिज्ञानशाकुन्तलम्

Kālidāsa wrote three plays -

मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, and अभिज्ञानशाकुन्तलम्. Of these, Abhijnāna Śākuntalā is also known as Śākuntalā play. The story of Śakuntalā and Duṣyanta forms the plot of the drama. Duṣyanta was a राजर्षि - Royal sage. Śakuntalā was Viśvāmitra's daughter and sage Kaṇva's foster-daughter. The king went to the forest for hunting. He entered Kaṇva's hermitage in the forest. There he saw Śakuntalā. He made acquaintance with her. They married through Gāndharva rites. Promising Śakuntalā that he would send for her after Duṣyanta returned to his kingdom giving her the signet ring. Once sage Durvāsā paid a visit to the hermitage. Immersed in the thought of Duṣyanta, Śakuntalā did not notice the sage. Enraged, Durvāsā cursed Śākuntalā that she shall be forgotten by her husband. Śakuntalā did not know this then.When her friends requested the sage, the sage said that Duṣyanta would remember Śakuntalā only if he sees a memento. When Śakuntalā went to Duṣyanta it happened as predicted and Duṣyanta did not remember her. The signet ring was also lost. Finding no other way, Śakuntalā, along with her mother Menaka came to the hermitage of Mārīca. There she gave birth to Duṣyanta's son. He was Bharata.

When the lost ring was found by a fisherman, Duṣyanta remembered Śakuntalā. He regretted his mistake. Once the king had gone to heaven to help the Gods. On his return, he happened to be united with his wife and son at the hermitage of Mārīca. Being blessed by the sage Mārīca all of them returned to the kingdom happily. This is the plot of the play.

Abhijñāna Śākuntalā is the best art work in the whole of Samskrit literature. The following verse speaks of the greatness of the work which is ranked among the world's best classics.

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ।।

Among the Kāvyas, Nāṭaka is beautiful, there again Śākuntalānāṭaka is more beautiful. Wherein also, the fourth Act and within the Act, the four verses are considered the best.

## ६. कथा

### साधूनां जीवनम्

गङ्गातीरे एकः साधुः आसीत् । सः साधुः बहु उपकारं करोति स्म । यः अपकारं करोति तस्यापि उपकारं करोति स्म । एकस्मिन् दिने सः गङ्गानद्यां स्नानं कर्तुं नदीं गतवान् । नदीप्रवाहे एकः वृश्चिकः आगतः । सः साधुः वृश्चिकं दृष्टवान् । तं हस्तेन गृहीतवान् । तीरे स्थापयितुं प्रयत्नं कृतवान् । किन्तु सः साधोः हस्तम् अदशत् । साधुः तं त्यक्तवान् । वृश्चिकः जले अपतत् । पुनः साधुः वृश्चिकं गृहीत्वा तीरे स्थापयितुं प्रयत्नं कृतवान् । पुनः वृश्चिकः हस्तम् अदशत् । एवम् अनेकवारं साधुः वृश्चिकं गृहीतवान् । वृश्चिकः अपि अदशत् ।

नदीतीरे एकः पुरुषः आसीत् । "साधुमहाराज ! अयं वृश्चिकः दुष्टः । सः पुनः पुनः दशति । भवान् किमर्थं तं हस्ते वृथा स्थापयति ? वृश्चिकं त्यजतु" इति उक्तवान् सः । तदा साधुः उक्तवान् - "वृश्चिकः क्षुद्रः जन्तुः । दंशनं तस्य स्वभावः । सः स्वस्य स्वभावं न त्यजति । अहं तु मनुष्यः । अहं मम परोपकारस्वभावं कथं त्यजामि ?" इति ।

यः अपकारिणाम् अपि उपकारं करोति सः एव साधुः भवति ।

## The ways of good men

There was a saint on the banks of the Ganges. He used to help others. He was doing good even to those who did harm to him. Everyday he used to bathe in the river Ganges. One day he went to the river for bathing. There came a scorpion along the

stream. The saint took the scorpion in his hand and tried to place it on the bank. But the scorpion bit the hand of the saint. The saint dropped the scorpion. The scorpion fell into the water. Again the saint took out the scorpion and tried to place it on the bank. Again the scorpion bit his hand. Thus the saint took out the scorpion several times and the scorpion bit him.

There was a man on the bank of the river. He said - "O ! Lord of saints ! This scorpion is harmful. It bites again and again. Why do you unnecessarily hold the scorpion in your hand ? Leave it". The saint said - "The scorpion is a lowly insect. Biting is its nature. It does not give up its nature. But I am a man, How can I give up my nature of doing good to others ?"

He who does good even to the one who does harm to him, is alone a saint.

**एतेषाम् उत्तरं लिखत ।**

१. गङ्गातीरे कः आसीत् ?
२. साधुः किं करोति ?
३. वृश्चिकः किम् अकरोत् ?
४. कः साधुः भवति ?

## ७. संस्कृतव्यवहारः

**किमर्थम् ? - Why ?**

Study attentively the following statements and questions.

सः **पठनार्थं** विद्यालयं गच्छति । सः **किमर्थं** विद्यालयं गच्छति ?
सा **आरोग्यार्थं** योगासनं करोति । सा **किमर्थं** योगासनं करोति ?
वेङ्कटेशः **प्रवासार्थं** विदेशं गच्छति । वेङ्कटेशः **किमर्थं** विदेशं गच्छति ?
गृहस्थः **सन्तोषार्थं** दानं करोति । गृहस्थः **किमर्थं** दानं करोति ?

In the above questions किमर्थम् is the interrogative word. The

meaning of this word is "Why ?" or "What for ?" To enquire about the reason for any action it is used.

Using "**किमर्थम् ?**" put questions and practise.

**कुत्र ? - Where ?**

Study the following sentences.

दिनेशः वैद्यालयं गच्छति । दिनेशः **कुत्र** गच्छति ?
रमणः काश्यां वसति । रमणः **कुत्र** वसति ?
वेदा पूजागृहे अस्ति । वेदा **कुत्र** अस्ति ?
राजेन्द्रः वाटिकायां कार्यं करोति । राजेन्द्रः **कुत्र** कार्यं करोति ?

कुत्र is one of the seven interrogative words. It means "Where ?" Rameśa lives in Kāśi. To ask where does Rameśa live the question word कुत्र is used.

Write down ten questions using कुत्र and practise.

**कुतः ? - From where ?**

Study the following sentences.

सावित्री **कुन्दापुरतः** आगतवती । सावित्री **कुतः** आगतवती ?
राघवः घटीं **विदेशतः** आनयति । राघवः घटीं **कुतः** आनयति ?
फलानि **वृक्षतः** पतन्ति । फलानि **कुतः** पतन्ति ?
सा भोजनं **गृहतः** आनयति । सा भोजनं **कुतः** आनयति ?
सः जपमालां **काशीतः** आनीतवान् । सः जपमालां **कुतः** आनीतवान् ?

The question word कुतः is one of the seven क-sounds in Samskrit. The meaning of the word is 'From where ?'

Eg - सावित्री **कुन्दापुरतः** आगतवती । "Where from has Savitri come ?" In this sense the word कुतः is used.

## Exercise

**I.** Two words are given below. Using the same write down the question and also the answer as in the example.

उदा - योगासनम् / आरोग्यार्थम्

i. सः किमर्थं योगासनं करोति ?

ii. सः आरोग्यार्थं योगासनं करोति ।

१. दानम् / पुण्यसम्पादनार्थम्

i. ............................ ?

ii. ............................।

२. प्रवासः / सन्तोषार्थम्

i. ............................ ?

ii. ............................।

३. क्रीडा / विनोदार्थम्

i. ............................ ?

ii. ............................।

४. विद्यालयः / ज्ञानार्थम्

i. ............................ ?

ii. ............................।

५. आपणः / क्रयणार्थम्

i. ............................ ?

ii. ............................।

**II.** Using the two given words, make the question and answer as shown in the example.

उदा - विश्वनाथः - काशी

i. विश्वनाथमन्दिरं कुत्र अस्ति ?

ii. विश्वनाथमन्दिरं काश्याम् अस्ति ।

१. श्रीरामः - अयोध्या

i. ............................ ?

ii. ............................ ।

२. श्रीकृष्णः - मथुरा

i. ............................ ?

ii. ............................ ।

३. शारदा - शृङ्गगिरिः

i. ............................ ?

ii. ............................ ।

४. मञ्जुनाथः - धर्मस्थलम्

i. ............................ ?

ii. ............................ ।

५. विठ्ठलः - पण्डरापुरम्

i. ............................ ?

ii. ............................ ।

**III.** Given below are the things Girīśa bought for his younger sister's wedding. It is mentioned where he brought them from. Accordingly, write down the questions and answers.

उदा – | शाटिकाः / काञ्ची |

i. गिरीशः शाटिकाः काञ्चीतः आनीतवान् ।

ii. गिरीशः शाटिकाः कुतः आनीतवान् ?

| १. आभरणानि / मङ्गलूरु |

i. ............................ ।

ii. ............................ ?

| २. आसन्दाः / बेङ्गलूरु |

i. ............................ ।

ii. ............................ ?

| ३. मधुरम् / भाग्यनगरम् |

i. ............................ ।

ii. ............................ ?

| ४. कटाः / चेन्नै |

i. ............................ ।

ii. ............................ ?

| ५. शय्याः / पूणा |

i. ............................ ।

ii. ............................ ?

---

**उत्तराणि –**

**I.** १. सः किमर्थं दानं करोति ? सः पुण्यसम्पादनार्थं दानं करोति । २. सः किमर्थं प्रवासं करोति ? सः सन्तोषार्थं प्रवासं करोति । ३. सः किमर्थं क्रीडति ? सः विनोदार्थं क्रीडति । ४. सः किमर्थं विद्यालयं गच्छति ? सः ज्ञानार्थं विद्यालयं गच्छति । ५. सः किमर्थम् आपणं गच्छति ? सः क्रयणार्थम् आपणं गच्छति ।

**II.** १. श्रीराममन्दिरं कुत्र अस्ति ? श्रीराममन्दिरम् अयोध्यायाम् अस्ति ।
२. श्रीकृष्णमन्दिरं कुत्र अस्ति ? श्रीकृष्णमन्दिरं मथुरायाम् अस्ति ।
३. शारदामन्दिरं कुत्र अस्ति ? शारदामन्दिरं शृङ्गगिरौ अस्ति ।
४. मञ्जुनाथमन्दिरं कुत्र अस्ति ? मञ्जुनाथमन्दिरं धर्मस्थले अस्ति ।
५. विठ्ठलमन्दिरं कुत्र अस्ति ? विठ्ठलमन्दिरं पण्डरापुरे अस्ति ।

**III.** १. गिरीशः आभरणानि मङ्गलूरुतः आनीतवान् । गिरीशः आभरणानि कुतः आनीतवान् ? २. गिरीशः आसन्दान् बेङ्गलूरुतः आनीतवान् । गिरीशः आसन्दान् कुतः आनीतवान् ? ३. गिरीशः मधुरं भाग्यनगरतः आनीतवान् । गिरीशः मधुरं कुतः आनीतवान् ? ४. गिरीशः कटान् चेन्नैतः आनीतवान् । गिरीशः कटान् कुतः आनीतवान् ? ५. गिरीशः शय्याः पूणातः आनीतवान् । गिरीशः शय्याः कुतः आनीतवान् ?

# ८. सुभाषितम्

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुरिति कीर्तितः ।।

If one is good to those who do good to him, of what merit is one's goodness ? It is only he who is good to even those who do harm to him, who is called a saint.

Answer to the riddle

**समपत्रम् (Post Card)**

# प्रवेशः- अष्टमः पाठः
## प्रश्नाः

1. Fill in the blanks with the क्त्वान्त forms of the verbs mentioned in brackets.

१. सः (गच्छति) ............ पठति ।

२. सः (पठति) ............ क्रीडति ।

३. सा (क्रीडति) ............ लिखति ।

४. राम (लिखति) ............ श्रृणोति ।

५. गीता (श्रृणोति) ............ खादति ।

६. अहं (पिबामि) ............ उत्तिष्ठामि ।

2. Give the ल्यप् ending forms of the following verbs.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १. अनु | + | सरति | ........ | २. प्र | + | सारयति | ...... |
| अनु | + | गच्छति | ........ | प्र | + | काशयति | ...... |
| अनु | + | धावति | ....... | प्र | + | दर्शयति | ........ |
| अनु | + | जीवति | ........ | प्र | + | क्षालयति | ....... |
| अनु | + | भवति | ....... | प्र | + | हरति | ........ |
| ३. परि | + | हरति | ........ | ४. निर् | + | दिशति | ...... |
| परि | + | णयति | ........ | निर् | + | गच्छति | ...... |
| परि | + | वेषयति | ....... | निर् | + | माति | ........ |
| परि | + | शीलयति | ....... | निर् | + | वापयति | ....... |
| परि | + | शोधयति | ....... | निर् | + | ईक्षते | ........ |

3. Translate the following into Samskrit.

1. Leaves fall from a branch.
2. Money falls from the pocket.
3. I am afraid of dog.
4. Fortnight is shorter than a month
5. She does not work due to laziness.

(**Note:** Answers for the above exercises are given in the end of this book. After completing them, check your answers.)

# प्रवेशः - नवमः पाठः

।। विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।।

Those, whose minds are not tempted even where there is cause for temptation, are alone brave.

## १. भाषाभ्यासः

**Verb**

Study the following sentences.

१. सः विदेशं **गन्तुम्** इच्छति । = He wishes to go abroad.

२. एषः **पठितुं** विद्यालयं गच्छति । = This person (masculine) goes to school to study.

३. इयं गीतं **गातुम्** उत्तिष्ठति । = This person (feminine) stands up to sing a song.

४. भक्तः देवं **वन्दितुं** देवालयं गच्छति । = A devotee goes to the temple to worship.

५. अहं **क्रीडितुं** क्रीडाङ्गणं गच्छामि । = I go to the play ground to play.

६. अम्बा **पक्तुं** महानसं प्रविशति । = Mother enters the kitchen to cook.

७. सः **खादितुम्** उपाहारमन्दिरं गच्छति । = He goes to a hotel to eat.

८. सा जयं **प्राप्तुं** वेगेन धावति । = She runs fast to get victory.

९. सर्वे चित्रं **द्रष्टुम्** इच्छन्ति । = All want to see the picture.

१०. वयम् अरण्यं **द्रष्टुं** गच्छामः । = We go to see the forest.

११. स्नानं **कर्तुं** जलमेव नास्ति । = There is no water to have bath.

१२. सिंहः जलं **पातुं** नदीं गच्छति । = A lion goes to the river to drink water.

१३. सः **स्नातुं** नदीं गतवान् । = He went to the river to take bath.

१४. अहं सङ्गीतं **श्रोतुम्** इच्छामि । = I wish to listen to music.

१५. सा कथां **लेखितुम्** इच्छति । = She wishes to write a story.

१६. छात्रः प्रश्नं **प्रष्टुम्** उद्युक्तः । = A student began/is preparing to ask a question.

१७. कः दीर्घकालं **जीवितुं** न इच्छति ? = Who does not wish to live long ?

१८. पिता कथां **वक्तुम्** इच्छति । = Father wishes to tell a story.

१९. शीघ्रम् **उत्थातुं** प्रयत्नं कुरु । = Try to get up early.

२०. सा नूतनां शाटिकां **धर्तुम्** इच्छति । = She wishes to wear a new saree.

The block lettered words above have 'तुमुन्' suffix. When a 'तुमुन्' is suffixed to a धातु, we get the above forms.

उदा - गम् + तुमुन् = गन्तुम्

पठ् + तुमुन् + पठितुम्

## विशेषः

Whenever we put a question to know the purpose of an action - like Why ? What for ? the reply we get is a word ending in 'तुमुन्' suffix.

Eg - अहं पठितुं गच्छामि = I go to study.
Why do I go ? To study - पठितुम् ।
सः द्रष्टुम् अगच्छत् । He went to see.
What for did he go ? To see. द्रष्टुम् ।

'तुमुन्' causes variations in some roots.

Eg नयति - नेतुम्
पचति - पक्तुम्
नमति - नन्तुम्
गायति - गातुम्
पश्यति - द्रष्टुम्
लिखति - लेखितुम्
गच्छति - गन्तुम्
मिलति - मेलितुम्
पृच्छति - प्रष्टुम्
पिबति - पातुम्
तिष्ठति - स्थातुम्
यच्छति - दातुम्

Study the following sentences.

१. बालकः अध्ययनं करोति । = A boy is studying.
२. मुनिः उपदेशं करोति । = A sage gives advice.
३. विक्रयिकः विक्रयणं करोति । = A seller sells.
४. पाचकः पाकं करोति । = A cook cooks.

| | |
|---|---|
| ५. चोराः पलायनं कृतवन्तः । | = Thieves ran away. |
| ६. सः शयनं कृतवान् । | = He slept. |
| ७. जनाः सम्माननं कृतवन्तः । | = People honoured (him/her). |
| ८. सेविका सम्मार्जनं करोति । | = A maid - servant sweeps. |
| ९. धार्मिकः सेवां करोति । | = A religious person serves. |
| १०. सः उत्प्रेक्षां करोति । | = He exaggerates. |
| ११. सा उपयोगं करोति । | = She uses. |
| १२. ग्रामीणः सञ्चयं करोति । | = A villager saves. |
| १३. एषः भोजनं करोति । | = This person (masculine) has a meal. |
| १४. कृषिकः सङ्ग्रहं करोति । | = A farmer collects. |
| १५. अध्यापकः भर्त्सनं करोति । | = The teacher scolds. |

In all the sentences above, the verb is split up into two words as अध्ययनं करोति, उपदेशं करोति, विक्रयणं करोति etc., using the common verb करोति ।

We can use a single verbal form instead of the above.

Eg - अध्ययनं करोति - अधीते
उपदेशं करोति - उपदिशति
विक्रयणं करोति - विक्रीणीते

Both the expressions mean the same. But the formation of the sentence is slightly different.

उदा -

| अ | आ |
|---|---|
| १. बालकः पुस्तकम् अधीते । | बालकः पुस्तकस्य अध्ययनं करोति । |
| २. मुनिः सत्यम् उपदिशति । | मुनिः सत्यस्य उपदेशं करोति । |
| ३. विक्रयिकः फलं विक्रीणीते । | विक्रयिकः फलस्य विक्रयणं करोति । |

Study the sentences in अ and आ columns above. In अ column, the object of the sentence governs Accusative case - पुस्तकम्, सत्यम्, फलम्... The same object is in Genitive Case in आ column like पुस्तकस्य, सत्यस्य, फलस्य.

You must know that when a single verbal form is used the object governs the Accusative case and when the verb is split up as ... करोति it governs the Genitive case.

To understand better study the following pairs of sentences with Accusative and Genitive cases.

| **Acc.case for the object** | **Gen.case for the object** |
|---|---|
| १. कपिः वनं नाशयति । | कपिः वनस्य नाशनं करोति । |
| २. जनाः सज्जनान् प्रशंसन्ति । | जनाः सज्जनानां प्रशंसां कुर्वन्ति । |
| ३. परीक्षकः गुणं परीक्षते । | परीक्षकः गुणस्य परीक्षां करोति । |
| ४. कार्यशीलः साधनम् उपयुङ्क्ते । | कार्यशीलः साधनस्य उपयोगं करोति । |
| ५. अध्यापकः व्याकरणम् अध्यापयति । | अध्यापकः व्याकरणस्य अध्यापनं करोति । |
| ६. सः द्वारं पिदधाति । | सः द्वारस्य पिधानं करोति । |
| ७. निर्धनः धनं सञ्चिनोति । | निर्धनः धनस्य सञ्चयं करोति । |
| ८. सा वीणाम् अभ्यस्यति । | सा वीणायाः अभ्यासं करोति । |
| ९. कर्मकरः सस्यं सिञ्चति । | कर्मकरः सस्यस्य सेचनं करोति । |
| १०. नायकः जनान् प्रोत्साहयति । | नायकः जनानां प्रोत्साहनं करोति । |
| ११. सभ्यः वादम् उपस्थापयति । | सभ्यः वादस्य उपस्थापनं करोति । |
| १२. आपणिकः पुस्तकं विक्रीणीते । | आपणिकः पुस्तकस्य विक्रयणं करोति । |
| १३. छात्रः नियमम् उल्लङ्घते । | छात्रः नियमस्य उल्लङ्घनं करोति । |
| १४. दुष्टः सज्जनं वञ्चयते । | दुष्टः सज्जनस्य वञ्चनां करोति । |

१५. गृहस्थः अतिथिम् अनुरुणद्धि । गृहस्थः अतिथेः अनुरोधं करोति ।

Now, a step ahead. Examine the sentences with Genitive Case. Here the words like नाशनम्, अध्यापनम्, सेचनम्, उपस्थापनम् ... etc. are used. All these are भावद्योतक words that convey action.(Destruction, teaching ... etc) भाव in Samskrit means क्रिया । Such words govern the genitive case.

उदा - पुस्तकस्य अध्ययनम्
ग्रन्थस्य पठनम्
द्वारस्य पिधानम्
पाठस्य स्मरणम्
धनस्य सञ्चयः
गुणस्य परीक्षा

In common usage भावद्योतक words are used with 'अनन्तरम्' and 'पूर्वम्' very often. Here the कर्मपद and the भावद्योतक word get षष्ठीविभक्ति when अनन्तरम् is used. In the case of पूर्वम् the कर्मपद gets षष्ठी and the भावद्योतक word पञ्चमी ।

उदा - १. सः **पुस्तकस्य** पठनस्य अनन्तरं स्नानं करोति ।
२. सः **ग्रन्थस्य** परिशीलनस्य अनन्तरं शेते ।
३. सा **देवस्य** पूजनात् पूर्वं स्नाति ।
४. सज्जनः **नीतेः** उपदेशात् पूर्वं स्वयम् आचरति ।
५. कर्मकरी **पात्रस्य** प्रक्षालनात् पूर्वं जलं सङ्गृह्णाति ।
६. **कार्यक्रमस्य** समाप्तेः अनन्तरं जनाः गच्छन्ति ।
७. **वृष्टेः** आगमनात् पूर्वं त्वं गृहं गच्छ ।
८. **लेखन्याः** क्रयणस्य अनन्तरं धनं देहि ।
९. **फलस्य** खादनात् पूर्वं हस्तं क्षालय ।
१०. **देवस्य** प्रार्थनायाः अनन्तरं सः गतवान् ।

## Case

Genitive case sentences.

१. **सूर्यस्य** उदयः भवति । = The Sun rise occurs.

२. **नद्याः** जलं प्रवहति । = The water of a river flows.

३. **तरोः** पर्णानि दीर्घाणि । = The leaves of the tree are long.

४. **गुरोः** पुत्रः पठति । = Teacher's son reads.

५. **चन्द्रिकायाः** धवलता शोभते । = The brightness of moonlight is nice.

६. **बुद्धेः** तीक्ष्णतां पश्य । = Look at the sharpness of mind !

७. **अग्नेः** ज्वाला रक्ता । = The flame of fire is red.

८. **अतिथेः** आगमनं भवति । = The arrival of guest occurs. (The guest arrives)

९. एतानि **नारीणाम्** आभरणानि । = These are the ornaments of ladies.

१०. **बन्धूनां** गृहाणि विशालानि । = The houses of relatives are big.

११. जनाः **रवेः** उदयं पश्यन्ति । = People watch the Sun rise.

१२. **देवानां** गुरुः बृहस्पतिः । = Bṛhaspati is the teacher of Gods.

१३. **शुक्राचार्यस्य** शिष्याः असुराः । = Śukrācārya's disciples are demons.

१४. **वाप्याः** जलं शीतलम् । = Well - water is cold.

१५. **उष्णोदकस्य** पानम् आरोग्याय । = Drinking (of) hot water is healthy.

१६. **पाण्डोः** पुत्रः धर्मराजः । = Dharmaraja was Pandu's Son.

१७. **कुन्त्याः** पुत्रः कर्णः । = Karṇa was Kuntī's son.

१८. **गिरीणां** शिखराणि रम्याणि । = The peaks of mountains are beautiful.

१९. **कवेः** पद्यानि रमणीयानि । = The poems of a poet are beautiful.

२०. **अभिमन्योः** पौत्रः जनमेजयः । = Janamejaya was the grand son of Abhimanyu.

२१. **पार्वत्याः** पुत्रः गणपतिः । = Gaṇapati is Pārvartī's son.

२२. **गणपतेः** चत्वारः हस्ताः । = Gaṇapathi has four hands.

२३. **पाण्डवानां** धर्मराजः श्रेष्ठः । = Dharmarāja is the best among Pāṇḍavās.

२४. **छात्राणां** बालिकाः बुद्धिमत्यः । = Among students girls are intelligent.

२५. **वृक्षाणां** नारिकेलः श्रेष्ठः । = Coconut tree is the best among trees.

## षष्ठीविभक्तिरूपाणि

| | *पुंलिङ्गे* | *स्त्रीलिङ्गे* | *नपुंसकलिङ्गे* |
|---|---|---|---|
| अकारान्तः | रामस्य - रामाणाम् | ...... ...... | वनस्य - वनानाम् |
| आकारान्तः | --- --- | रमायाः - रमाणाम् | --- --- |
| इकारान्तः | हरेः - हरीणाम् | मतेः - मतीनाम् | दध्नः - दध्नाम् |
| ईकारान्तः | --- --- | नद्याः - नदीनाम् | --- --- |
| उकारान्तः | गुरोः - गुरूणाम् | धेनोः- धेनूनाम् | मधुनः - मधूनाम् |
| ऋकारान्तः | पितुः - पितॄणाम् | मातुः - मातॄणाम् | ------ |

**सर्वनामशब्दाः**

| | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| दकारान्तः 'तद्'शब्दः | तस्य-तेषाम् | तस्याः-तासाम् | तस्य-तेषाम् |
| दकारान्तः 'एतद्'शब्दः | एतस्य-एतेषाम् | एतस्याः-एतासाम् | एतस्य-एतेषाम् |
| मकारान्तः 'किम्'शब्दः | कस्य-केषाम् | कस्याः-कासाम् | कस्य-केषाम् |
| दकारान्तः त्रिलिङ्गकः 'अस्मद्'शब्दः - मम - अस्माकम् | | | |
| दकारान्तः त्रिलिङ्गकः 'युष्मद्'शब्दः - तव - युष्माकम् | | | |

## Some rules of Genitive Case

1. The response for questions like 'whose ?' 'of which ?', are 'his' 'their' 'of them'. This reply will be in Genitive case.
   Eg - गुरोः पुत्रः = Teacher's son. Whose son ? गुरोः of teacher.
2. Genitive case is used for the words meaning 'Among these'
   Eg - पाण्डवानां धर्मराजः ज्येष्ठः Dharmarāja is the eldest among Paṇḍavās.

## अभ्यासः

I. Use तुमन् ending words instead of dative case ending words.

उदा - सः (गमनाय) गन्तुम् इच्छति ।

१. रामः (पठनाय) ................ गतवान् ।

२. छात्रः (लेखनाय) ................ इच्छाति ।

३. अहं (प्रश्नाय) ...................... इच्छामि ।

४. बालाः (क्रीडनाय) .................... प्रवृत्ताः ।

५. सर्वे (दर्शनाय) .................. गताः ।

६. अहं (श्रवणाय) .................. उद्युक्तः ।

७. सः (क्रयणाय) ................. विपणिं गतः ।

८. सा (गानाय) .............. वेदिकाम् आरोहति ।

**II.** Make two sentences with each pair of sentences as shown in the example.

पूर्वम् अनन्तरम्

उदा - रामः फलं खादति । गृहं गच्छति ।

१. रामः फलस्य खादनस्य अनन्तरं गृहं गच्छति ।

२. रामः गृहस्य गमनात् पूर्वं फलं खादति ।

अ. हरिः भक्तं पश्यति । वरं ददाति ।

१. हरिः ....... ............ अनन्तरं ........ ....... ।

२. हरिः ........ ............ पूर्वं ......... .......... ।

आ. गुरुः योग्यतां परिशीलयति । नीतिं बोधयति ।

१. गुरुः ....... .......... अनन्तरं ........ ........... ।

२. गुरुः ........ ............ पूर्वं ....... ......... ।

इ. गीता वृष्टिम् अवलोकते । छत्रं प्रसारयति ।

१. गीता ........ .......... अनन्तरं ....... ...........।

२. गीता ........ ............ पूर्वं ........ ........... ।

ई. छात्रः वाक्यं स्मरति । उत्तरं लिखति ।

१. छात्रः ........ .......... अनन्तरं .......... ....... ।

२. छात्रः ........ ............. पूर्वं ........... ....... ।

उ. माता तण्डुलं क्षालयति । अन्नं करोति ।

१. माता ........ .......... अनन्तरम् ......... ........ ।

२. माता ........ .......... पूर्वं ........... ............ ।

**III.** Fill up the blanks with the Genitive case form of the word given in brackets.

उदा - (रामः) रामस्य पिता दशरथः ।

१. (लक्ष्मणः) ........... अग्रजः रामः ।

२. (कैकेयी) ....... पुत्रः भरतः ।

३. (कौसल्या) ........ पुत्रः रामः ।

४. (सुमित्रा) ....... पतिः दशरथः ।

५. (सूर्यः) ............ उदयः रमणीयः ।

६. (रविः) ............ किरणाः उग्राः ।

७. (भानुः) ............ सारथिः अरुणः ।

८. (आचार्यः) ............. उपदेशं शृणु ।

९. (गुरुः) ............ उपदेशं पालय ।

१०. (अध्यापिका) ........... उपदेशम् अनुसर ।

(**Note :** Compare your answers with those on the end of this book and ascertain their correctness.)

## २. व्यावहारिकशब्दाः

### पाकशालासाधनानि

१. लवित्रम् = Small sickle. २. ईली = A Big knife (fixed to a wooden plank).

३. छुरिका = Knife. ४. दर्वी = Ladle (Big spoon).

५. रन्ध्रदर्वी = Sieved spoon. ६. वेल्लनी = Rolling pin.

७. पेषणयन्त्रम् = Grinder. ८. बाष्पस्थाली = Cooker.

९. स्थालिका = Plate. १०. चषकः = Tumbler.

११. चमसः = Spoon(small). १२. द्रोणी = Bucket.

१३. भ्राष्ट्रम् = Deep frying pan. १४. पिष्टपचनम् = A

shallow pan (tava).

१५. शूर्पः = Winnowing Basket. १६. पट्टः = Grind-stone.
१७. उलूखलम् = Grinder. १८. मन्थानः = Churning stick.
१९. सन्दंशः = Tongs २०. कलशः = Vessel (round).
२१. शीतकम् = Fridge. २२. उष्णरक्षकम् = Flask.
२३. तापकः = Boiler. २४. मिश्रकम् = Mixer.

## ३. प्रहेलिका

वृक्षाग्रवासी न च पक्षिराजः त्रिणेत्रधारी न च शूलपाणिः ।
त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः ।।

It lives on top of the tree, but it is not the lord of birds. It has three eyes, but it is not God Śiva. It wears clothes made of skin, but it is not a mendicant. It contains water, but is neither a pot nor a cloud. What is it ?

(**Answer** - See the Page No - 174 )

## ४. सङ्ग्राह्यविषयाः

### Rama

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ।।

Salutations to Sri Rāma, the lord of Sītā. He is most sacred. He exudes happiness like the moon and He is the Supreme God. Hence, He is the Lord of the Universe who has taken birth as a king of Raghu dynasty.

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।।

I bow to SriRāma again and again; Rama who is the remover of difficulties, bestower of all kinds of wealth; and who is loved by all the people.

# ५. संस्कृतवाङ्मयपरिचयः

## उत्तररामचरितम्

The author of this play is Bhavabhūti.The story of abandonment of Sītā found in the Uttarakāṇḍa of Rāmāyaṇa, is the theme of this drama.

Soon after the coronation of Rāma, the elders Kausalyā and others went to Ṛṣyaśṛṅga's hermitage. In Ayodhya, when Sītā was resting on the lap of Rāma a spy came and reported to Rāma the rumour about Sītā prevalent among the people. Rāma decided to abandon Sītā and sent her away to the forest. The twin sons of Sītā Lava and Kuśa were born and they grew up in the hermitage of Vālmīki. Meanwhile Rāma decided to perform the अश्वमेध (horse sacrifice) in Ayodhya and sent the sacrificial horse on expedition. Lava bound the horse that came to the forest. On that score there was a fight between Kuśa and Candraketu, the son of Lakṣmaṇa. At that juncture, Rāma arrived there and stopped the fight. Then all of them came to know one another. The great sage Vālmīki presented Sītā with Lava and Kuśa to Rāma.

Bhavabhūti has introduced some changes in the story of Rāmāyaṇa to make it effective as a drama. This play occupies a place of merit in Samskrit literature.

'उत्तरे रामचरिते भवभूतिः विशिष्यते'

# ६. कथा

## सहसा विदधीत न क्रियाम्

एकस्मिन् ग्रामे एका महिला वसति स्म । सा एकं नकुलं पालयति स्म । नकुलस्य विषये तस्याः बहुप्रीतिः आसीत् । महिलायाः एकः शिशुः अपि आसीत् । तस्याः गृहस्य समीपे जलं न आसीत् । जलम् आनेतुं सा दूरं

गच्छति स्म ।

एकस्मिन् दिने जलम् आनेतुं सा अगच्छत् । गृहे कोऽपि न आसीत् । तस्याः शिशुः निद्रितः आसीत् । महिला बहिः गता । तदा एकः सर्पः गृहम् आगतः । नकुलः सर्पम् अपश्यत् । सर्पः शिशुसमीपम् अगच्छत् । नकुलः तत्क्षणे एव सर्पस्य उपरि अपतत् । क्षणमात्रेण एव सः सर्पम् अमारयत् ।

महिला जलं गृहीत्वा आगता । द्वारे एव नकुलः उपविष्टः । महिला नकुलस्य मुखम् अपश्यत् । नकुलस्य मुखं रक्तमयम् ! सा अचिन्तयत् - 'अयं नकुलः मम शिशुम् अखादत् । अतः एव अस्य मुखं रक्तम्' इति । सा तत्क्षणे एव एकं शिलाखण्डं नकुलस्य उपरि अक्षिपत् । नकुलः मृतः । अनन्तरं सा गृहस्य अन्तः गता । तत्र शिशुः क्रीडति !! तत्रैव मृतं सर्पम् अपश्यत् । सा बहु दुःखिता अभवत् । अविचारेण मया नकुलः संहृतः इति सा पश्चात्तापेन पीडिता अभवत् ।

अतः किमपि कार्यं सहसा न कर्तव्यम् । विचारं कृत्वा एव कर्तव्यम् ।

## Hasty Action Should be Avoided

There lived a woman in a village. She had reared a mongoose. She had great affection towards the mongoose. She had a baby also. Water was not avilable near her house. She used to go far to bring water.

One day she went to bring water. There was nobody in the house. Her baby was sleeping. The lady went out. Then a serpent came into the house. The mongoose saw the serpent. The serpent went near the child. Immediately the mongoose fell on the serpent. Within a moment it killed the serpent.

The woman came back with water. The mongoose was sitting at the door itself. She saw the mouth of the mongoose. It was smeared with blood. She thought - "This mongoose has eaten my baby. That is why its mouth is bloody." Immediately

she threw a stone at the mongoose. The mongoose died. Then she entered the house. There the baby was playing. She saw the serpent lying dead just there. She was very sad. She repented thinking that she had killed the mongoose without clearly understanding the situation.

Hence one should not do anything in haste. One should think well and act.

एतेषाम् उत्तरं लिखत ।

१. ग्रामे का वसति स्म ?
२. सा किमर्थं दूरं गच्छति स्म ?
३. नकुलः कम् अपश्यत् ?
४. नकुलस्य मुखं कथम् आसीत् ?
५. महिला किम् अचिन्तयत् ?

## ७. संस्कृतव्यवहारः

**कदा ?** When ?

Study the following setences.

१. सूर्योदयः **प्रातः** भवति । सूर्योदयः **कदा** भवति ?

२. सीता **सायं** नृत्याभ्यासं करोति । सीता **कदा** नृत्याभ्यासं करोति ?

३. पितामहः **परश्वः** आगमिष्यति । पितामहः **कदा** आगमिष्यति ?

४. ते **ह्यः** आगताः आसन् । ते **कदा** आगताः आसन् ?

५. **अद्य** कृष्णस्य जन्मदिनोत्सवः । कृष्णस्य जन्मदिनोत्सवः **कदा** ?

The meaning of 'कदा' is "When?" The sun rises in the morning. When is the Sun-rise ?

(The reply for 'कदा' can be given in locative case also.

Eg - भरतनाट्यप्रदर्शनं **कदा** भविष्यति ?

भरतनाट्यप्रदर्शनम् **अन्तिमभानुवासरे** भविष्यति ।

(The Loc.case will be introduced in the next lesson.)

**सप्त ककाराः**

You have learnt till now the seven words for questioning. They are popular as **सप्त ककाराः** । Let us recapitulate them once. किम् - What ?, कुत्र - Where ?, कति - How many ?, कदा - When ?, कुतः - From where ?, कथम् - How ?, किमर्थम् - Why ?

Learning these questioning words not only makes conversation easier but also helps in understanding the language very well. Let us see an example for each of these.

१. श्रीकृष्णः कुचेलस्य मित्रम् । **कः** कुचेलस्य मित्रम् ?
२. श्रीहरिः अयोध्यां गच्छति । श्रीहरिः **कुत्र** गच्छति ?
३. रामस्य षट् अङ्गुल्यः सन्ति । रामस्य **कति** अङ्गुल्यः सन्ति ?
४. मातामही सप्तवादने आगतवती । मातामही **कदा** आगतवती ?
५. राष्ट्रपतिः चेन्नैतः आगमिष्यति । राष्ट्रपतिः **कुतः** आगमिष्यति ?
६. बालमुरली मधुरं गायति । बालमुरली **कथं** गायति ?
७. दीपिका आरोग्यार्थं हसति । दीपिका **किमर्थं** हसति ?

**अभ्यासः**

**I.** Make questions with the following sentences with reference to the underlined words.

१. स्वातन्त्र्यदिनोत्सवः परश्वः ।
२. सुरेन्द्रः अमरनाथं श्वः गमिष्यति ।
३. वाग्देवी प्रातः गतवती ।
४. इदानीम् अध्यापकः पाठयति ।
५. प्रपरह्यः पितामहः आगतः आसीत् ।

**II.** किम्, कति, कुत्र, कदा, कुतः, कथं, किमर्थम् - Make questions

using these seven questioning words with reference to the underlined words.

१. शिवानन्दः देहलीनगरे वसति ।

२. अम्बिका गोकर्णतः आगतवती ।

३. भवतः माता रमादेवी ।

४. पितामही विनोदार्थं नृत्यति ।

५. आपणे सप्त जनाः सन्ति ।

६. विमला त्रिवादने मिलितवती ।

७. श्रीधरः सुन्दरः अस्ति ।

८. सः उच्चैः सम्भाषणं करोति ।

९. जलम् उपरिष्टात् पतति ।

१०. सः दश वाक्यानि अवदत् ।

**III.** Fill in the blanks with the interrogative word suitable to the answer shown in brackets.

१. आरोग्यं .............. अस्ति ? (सम्यक्)

२. लेखनी ............... अस्ति ? (गृहे)

३. तत्र ................. जनाः सन्ति। (दश)

४. सः ........... आगतवान् ? (अध्ययनाय)

५. रमेशः .......... आगतवान् ? (ह्यः)

६. एतत् ........... आनीतवान् भवान् ? (आपणतः)

७. भवतः पिता ........... गतवान् ? (कार्यालयम्)

८. अङ्गणे ............. बालाः सन्ति ? (पञ्चदश)

९. छात्राः ............... धावन्ति ? (वेगेन)

१०. शब्दः ............... आगच्छति ? (दूरतः)

(Answers on the next page)

# ८. सुभाषितम्

न किञ्चित् सहसा कार्यं कार्यं कार्यविदा क्वचित् ।
क्रियते चेत् विविच्यैव तस्य श्रेयः करस्थितम् ।।

Never should a wise man do a work in haste. If he does it with due deliberation success is surely in his hands.

**Answer to the Riddle**

नारिकेलम् (Coconut)

**उत्तराणि –**

**I.** १. स्वातन्त्र्यदिनोत्सवः कदा ? २. सुरेन्द्रः अमरनाथं कदा गमिष्यति ? ३. वाग्देवी कदा गतवती ? ४. कदा अध्यापकः पाठयति ? ५. कदा पितामहः आगतः आसीत् ?

**II.** १. शिवानन्दः कुत्र वसति ? २. अम्बिका कुतः आगतवती ? ३. रमादेवी का ? ४. पितामही किमर्थं नृत्यति ? ५. आपणे कति जनाः सन्ति ? ६. विमला कदा मिलितवती ? ७. श्रीधरः कथम् अस्ति ? ८. सः कथं सम्भाषणं करोति ? ९. जलम् कुतः पतति ? १०. सः कति वाक्यानि अवदत् ?

**III.** १. कथम्, २. कुत्र, ३. कति, ४. किमर्थम्, ५. कदा, ६. कुतः, ७. कुत्र, ८. कति, ९. कथम्, १०. कुतः ।

# प्रवेशः- नवमः पाठः

## प्रश्नाः

1. Construct sentences using तुमुन्नन्त words as shown in the example.

   (पठनम्. अध्ययनम्, लेखनम्, क्रीडनम्, सेवा, त्यागः)

   उदा - ज्ञानम् - अहम् ज्ञातुम् इच्छामि ।

   १. अहं ......... इच्छामि । २. अहं ......... इच्छामि ।

   ३. अहं ......... इच्छामि । ४. अहं ......... इच्छामि ।

   ५. अहं ......... इच्छामि । ६. अहं ......... इच्छामि ।

2. Using the two words given answer the question 'भवान् किं कर्तुम् इच्छति ?'

   उदा - (पुस्तकम् / पठनम्) अहं पुस्तकस्य पठनं कर्तुम् इच्छामि ।

   १. ग्रन्थः / परिशीलनम् ............. ।

   २. समाजः / सेवा .............. ।

   ३. संस्था / आरम्भः .............. ।

   ४. गीता / अध्ययनम् .............. ।

   ५. वस्त्रम् / प्रक्षालनम् .............. ।

3. Translate the following into Samskrit.

   1. Branch of the tree is long.
   2. School children play.
   3. Śukrācārya is the Guru of Asuras.
   4. Kaca is the disciple of Śukrācārya.
   5. Srīkrisṇa is the guide of Pāṇdavas.
   6. Devotees of Gaṇapati are everywhere.

(**Note:** Answers for the above exercises are given in the end of this book. After completing them, check your answers.)

# प्रवेशः - दशमः पाठः

।। गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।।

Virtues alone are the ground of respect in virtuous persons and not their sex or age.

## १. भाषाभ्यासः

### LAKĀRAS : (लकाराः)

A verb root takes 10 kinds of affixes, viz., लट्, लिट्, लुट्, ऌट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, and ऌङ् to convey tenses and moods. Since the letter ल is common to all the ten they are designated as Lakāras. Among these लेट् lakāra is used only in the Vedas. However, the lakāras are still 10 in number in classical Samskrit since लिङ् lakāra is further divided into विधिलिङ् and आशीर्लिङ् ।

All these lakāras are substituted by तिङ्. A word ending in a तिङ् affix is a तिङन्त and it is a verb (क्रियापदम्).

तिङ् affixes or conjugational affixes are totally 18 in number. They are classified into 2 groups of nine each. The first group is named as परस्मैपद the 2nd group as आत्मनेपद. Each of these is again divided into प्रथमपुरुष (III person), मध्यमपुरुष (II Person), and उत्तमपुरुष (I Person) and एकवचन (Singular), द्विवचन (Dual) and बहुवचन (Plural) as given below:

| | | Sing. | Dual. | Plu. | |
|---|---|---|---|---|---|
| प्रथमपुरुष | (III person) | तिप् | तस् | झि | |
| मध्यमपुरुष | (II Person) | सिप् | थस् | थ | परस्मैपदम् |
| उत्तमपुरुष | (I Person) | मिप् | वस् | मस् | |
| प्रथमपुरुष | (III person) | त | आताम् | झ | |
| मध्यमपुरुष | (II Person) | थास् | आथाम् | ध्वम् | आत्मनेपदम् |
| उत्तमपुरुष | (I Person) | इट् | वहिङ् | महिङ् | |

An abbreviation (प्रत्याहार) is got by adding ति of तिप् and ङ् of महिङ्. Therefore तिङ् stands for the 18 affixes. These assume different forms in different lakāras. Together they are known as तिङ् and लट्, लिट् etc., (as the case may be). For this very reason all the verbal forms are referred to as तिङन्ताः ।

Eg. अभवत् (लङ्) तिप् affix has became त् .

भवतु (लोट्) तिप् affix has became तु.

वर्धते (लट्) त affix has became ते.

वर्धताम् (लोट्) त affix has became ताम्.

परस्मैपद affixes are enjoined after certain verb roots. These verb roots are termed as Parasmaipadins. A few others take आत्मनेपद terminations and therefore they are called Atmanepadin verb roots. Yet others take both परस्मैपद and आत्मनेपद affixes and they are designated as Ubhayapadins.

Generally these 10 lakaras convey moods and tenses as follows:

लट् = Present tense
(लेट्) = In the Vedas.
लुङ्, लङ्, लिट् } = Past tense.

लुट्<br>लृट् } = Future tense.

लृङ् = Causal relationship in the absence of accomplishment of action. (Past or future)

लोट्<br>विधिलिङ् } = Command, Entreaty, Request etc.

आशीर्लिङ् = Benediction.

All this is summed up in the verse below:

लड्वर्तमाने लेड्वेदे भूते लुङ्लङ्लिटस्तथा ।<br>विध्याशिषोस्तु लिङ्लोटौ लृङ्लृटौ लुङ् भविष्यति ।।

## Scheme of Tenses

Time consists of present, past and future. If an action has begun but not yet completed it is present tense. If the action is already accomplished it is past tense. On the other hand, if the action is not yet begun it is Future tense.

Past tense is three fold: Aorist (Today's action सामान्यभूत), Imperfect (Immediate past अनद्यतनभूत) and Perfect or Remote past (परोक्षभूत). Today is the time gap between 12 o'clock of the previous night and 12 o'clock tonight. Action not pertaining to today is अनद्यतन (that which is not अद्यतन is अनद्यतन.) The action which falls outside our direct preception is परोक्षभूत or remote past लङ्, लुङ् and लिट् Lakāras are used in the sense of अनद्यतनभूत, सामान्यभूत and परोक्षभूत respectively. If the action does not belong to either remote past or immediate past, but meant only as just completed, then the time of action is merely सामान्यभूत.

Henceforth time from 12 o'clock tonight is first furture ie. अनद्यतनभविष्यत्. In this sense लुट्लकार is used. On the other hand, लृट्लकार second or simple future is employed in the sense of indefinite future ie. सामान्यभविष्यत्. It is said that लृङ्लकार is

employed in the sense of condition or supposition, when the action has not taken place. This may be better understood by an illustration:

सुवृष्टिः यदि अभविष्यत् तर्हि सुभिक्षम् अभविष्यत् ।

"Had there been rains there would have been plenty of crops."

There are two actions - 1. Raining 2. Crops becoming plenty. Former is the cause for the latter. So, there is causal relationship (हेतुहेतुमद्भाव) between the two. It means that, there is neither rain nor plenty of crops and therefore the action has not occurred. The lakāra that gives this sense is **ऌङ्** ie. Subjunctive Mood (conditional past or Future).

Examples -

१. यदि एषः सम्यक् अपठिष्यत् तर्हि परीक्षायाम् उत्तीर्णः अभविष्यत् ।
   If he had studied well he would have passed in the examination.

२. यदि रामः वनं न अगमिष्यत् तर्हि राक्षससंहारः न अभविष्यत् ।
   Had not Rāma gone to the forest the destruction of demons would not have been there.

३. यदि निद्रा आगमिष्यत् तर्हि शिरोवेदना अपगता अभविष्यत् ।
   Had there been sleep, headache would have vanished.

४. यदि भवान् असूचयिष्यत् तर्हि अहम् अकरिष्यम् ।
   If you had indicated, I would have done it.

५. यदि अहं तथा अकरिष्यं तर्हि गुरुः माम् अनिन्दिष्यत् ।
   If I had done like that, the teacher would have reprimanded me.

This is a brief introduction to the 10 lakāras. In the earlier lessons **लट्** - Present tense (भवति, भवतः, भवन्ति) लङ् = Imperfect tense (अभवत्, अभवताम्, अभवन्) लोट् = Imperative mood (भवतु, भवताम्, भवन्तु) ऌट् = and **ऌट्** Simple future (भविष्यति, भविष्यतः, भविष्यन्ति) are elaborately given.

Since other lakāras are not necessary at this juncture they are not dealt in detail.

## Ten classes of Verb Roots - The ten Gaṇas

You know that पठ्, लिख्...etc., that are expressive of actions, are Dhātus or Verb roots. In Samskrit there are as many as 2000 Primary verb roots. (Countless number of word forms can be derived with these dhātus by adding a variety of prepositions and affixes.) The verb roots are classified into 10 Gaṇas (Conjugational classes) according to the pattern the verbal forms follow. They are known as 1st 2nd.... and 10th Gaṇa. On the basis of the 1st verb root of the respective Gaṇa the 10 Gaṇas are recognised as भ्वादिः, अदादिः etc.

Eg. The 1st verb root of the 1st Gaṇa is भू. and therefore the Gaṇa is भ्वादिः (Gaṇa which has 'भू' at the beginning.) The 1st verb root of the 2nd Gaṇa is अद्. Therefore it is अदादिः (Gaṇa which has 'अद्' at the beginning.) etc.

Here is the table containing the10 Gaṇas, the first verb root of each of them and its form in लट्लकार - प्रथम पुरुष - एकवचनम् ।

| Name of the Gaṇa | 1st verb root (sense) | Present tense III Per. Sing. |
|---|---|---|
| 1st Gaṇa भ्वादिः | भू (to be) | भवति |
| 2nd Gaṇa अदादिः | अद् (to eat) | अत्ति |
| 3rd Gaṇa जुहोत्यादिः | हु (to offer an oblation) | जुहोति |
| 4th Gaṇa दिवादिः | दिव् (to gamble/play) | दीव्यति |
| 5th Gaṇa स्वादिः | सूञ् (to procreate) | सुनोति |
| 6th Gaṇa तुदादिः | तुद् (to torment) | तुदति |
| 7th Gaṇa रुधादिः | रुध् (to hinder) | रुणद्धि |
| 8th Gaṇa तनादिः | तन् (to extend) | तनोति |
| 9th Gaṇa क्र्यादिः | क्रीञ् (to buy) | क्रीणाति |
| 10th Gaṇa चुरादिः | चुर् (to steal) | चोरयति |

There are 3 constituents in 'पठति' ।

पठ् + अ + ति

धातुः (verb root) + विकरणप्रत्यय + आख्यातप्रत्ययः (Conjugational affix.)

The first constituent viz., Dhātu denotes the action and the second constituent viz., Vikaraṇa pratyaya expresses the particular class the verb root belongs to. Generally each Gaṇa has a different Vikaraṇa pratyaya by recognising which we can know the Gaṇa. The thrid constitutent conveys the mood or tense ie., लकार, पुरुष and वचन also.

To know accurately the class to which a verb root belongs a thorough study of vikaraṇa pratyayas along with constant practice, is required. However, at present the above brief introduction is sufficient.

## Case

(a) Sentences with words in the **Locative case**.

१. कमलानि कासारे सन्ति । = Lotuses are in the lake.
२. पुष्पाणि लतायां विकसन्ति । = Flowers bloom in creepers.
३. पर्णानि भूम्यां पतन्ति । = Leaves fall on the ground.
४. छात्राः कक्ष्यासु उपविशन्ति । = Students sit in classrooms.
५. भक्तिः शम्भौ भवतु । = Let devotion be there in Śambhu.
६. वाहनानि मार्गेषु सञ्चरन्ति । = Vehicles move on the road.
७. मयूराः गिरिषु नृत्यन्ति । = Peacocks dance on the hills.
८. तरुणाः नद्यां तरन्ति । = Youths swim in the river.
९. समुद्रे मौक्तिकानि भवन्ति । = Pearls are in ocean.
१०. बालिकाः क्रीडाङ्गणे क्रीडन्ति । = Girls play in the playground.
११. गजाः अरण्ये सञ्चरन्ति । = Elephants move in the forests.
१२. नार्यः सभायां गायन्ति । = Women sing in the assembly.
१३. कल्पतरवः अमरावत्यां वर्तन्ते । = Kalpavṛkṣas are in Amarāvati.
१४. कार्यालयाः नगरीषु भवन्ति । = Offices are in cities.

१५. अहं सायङ्काले गच्छामि । = I go in the evening.

१६. ऋषयः भारतदेशे आसन् । = Ṛṣis were living in Bharata.

१७. विरामः भानुवासरे भवति । = Holiday is on Sunday.

१८. सः आसन्दे उपविशति । = He sits in a chair.

१९. मातृभूमौ प्रीतिः भवतु । = Let there be love for the motherland.

२०. महाभारते अनेकाः कथाः विद्यन्ते । = There are many stories in the Mahābhārata.

२१. व्याकरणे मम आसक्तिः अस्ति । = I am interested in grammar.

२२. ज्येष्ठेषु आदरं दर्शय । = Show respect to elders.

२३. दरिद्रेषु प्रीतिः भवतु । = Have compassion for the poor.

२४. दुर्व्यसने रुचिः मास्तु । = Have no interest in bad habits.

२५. समाजसेवायां प्रवृत्तिः भवतु । = Indulge in Social work serving the society.

**सप्तमीविभक्तिरूपाणि**

| | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| अकारान्तः | रामे - रामेषु | ......... ......... | वने - वनेषु |
| आकारान्तः | ..... ..... | रमायाम् - रमासु | ..... ..... |
| इकारान्तः | हरौ - हरिषु | मत्यां, मतौ } मतिषु | दध्नि, दधनि } दधिषु |
| ईकारान्तः | ..... ..... | नद्याम् - नदीषु | .... ..... |
| उकारान्तः | गुरौ - गुरुषु | धेन्वाम्, धेनौ } धेनुषु | मधुनि - मधुषु |
| ऋकारान्तः | पितरि - पितृषु | मातरि - मातृषु | ..... ..... |

**सर्वनामशब्दाः**

| | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| दकारान्तः 'तद्'शब्दः | तस्मिन्-तेषु | तस्याम्-तासु | तस्मिन्-तेषु |
| दकारान्तः 'एतद्'शब्दः | एतस्मिन्-एतेषु | एतस्याम्-एतासु | एतस्मिन्-एतेषु |
| मकारान्तः 'किम्'शब्दः | कस्मिन्-केषु | कस्याम्-कासु | कस्मिन्-केषु |
| दकारान्तः त्रिलिङ्गकः 'अस्मद्'शब्दः - मयि - अस्मासु | | | |
| दकारान्तः त्रिलिङ्गकः 'युष्मद्'शब्दः - त्वयि - युष्मासु | | | |

## Some rules pertaining to the Locative case

1. The answer to the question "Where ?" (कुत्र) on the verb will be in the Locative case. उदा - कमलानि कासारे सन्ति । कुत्र सन्ति ? कासारे (in Locative case)
2. The answer indicating time in response to the question 'When ?' (कदा) on the verb, will be in the Locative case. उदा - अहं सायङ्काले गच्छामि । कदा ? सायङ्काले (Locative case expressing time.)
3. The word expressing something on which one sits, stands, etc., will be in the Locative case. उदा - कटे (on the mat) उपविशति ।
4. Locative case has to be used for the word that denotes a person/thing for whom/which liking, devotion, respect etc. are shown.

   उदा - ज्येष्ठे श्रद्धा / आदरः भवतु ।

**सम्बोधनाविभक्तिः**

In the preceding lesson, the seven cases were discussed. Apart from these seven cases, there is "सम्बोधनाविभक्तिः" (Vocative case of address) also. The Vocative case is only a variation of the Nominative case (Prathama Vibhakti) and not an independent case.

We use the Vocative case to address a person.

उदा - हे राम ! O ! Rama

भोः and हे are used to indicate that it is vocative.

१. भोः मुकुन्द ! अत्र पश्य । - O Mukunda ! Look here.

२. हे गोविन्द ! कुत्र गच्छसि ? - O Govinda ! Where are you going ?

अये, अयि, अरे, रे and others are used for addressing. मान्य, महोदय, श्रीमन्, आर्य etc. and मान्ये, आर्ये, मातः, भगिनि etc. are used for addressing men and women respectively. It is left to one's discretion as to which of them suits better in a given context.

The Vocative singular form differs from the Nominative singular. The dual and the plural forms in Vocative and Nominative are the same. Given below are a few forms in Vocative singular.

अकारान्तपुंलिङ्गे - राम!

इकारान्तपुंलिङ्गे - हरे !

उकारान्तपुंलिङ्गे - गुरो !

आकारान्तस्त्रीलिङ्गे - रमे !

इकारान्तस्त्रीलिङ्गे - मते !

ईकारान्तस्त्रीलिङ्गे - नन्दिनि !

उकारान्तस्त्रीलिङ्गे - धेनो !

उकारान्तस्त्रीलिङ्गे - धेनो !

## अभ्यासः

**I.** A clue about what is found in what is given. Make sentences with these words using the hint.

| पुष्पम् → लता - वृक्षः - माला - मस्तकम् - कण्डोलः |
|---|

उदा - पुष्पं लतायाम् अस्ति ।

१. पुष्पं .............. अस्ति ।

२. पुष्पं .............. अस्ति ।

३. पुष्पं .............. अस्ति ।

४. पुष्पं .............. अस्ति ।

| श्लोकाः → गीता - ग्रन्थः - रामायणम् - नाटकम् - नाटिका |
|---|

उदा - श्लोकाः गीतायां सन्ति ।

१. श्लोकाः ............ सन्ति ।
२. श्लोकाः ............ सन्ति ।
३. श्लोकाः ............ सन्ति ।
४. श्लोकाः ............ सन्ति ।

| जनाः → कार्यक्रमाः - कार्यालयाः - गृहाणि - सभाः - वीथ्यः |
|---|

उदा - जनाः कार्यक्रमेषु भवन्ति ।

१. जनाः ........ भवन्ति । २. जनाः ........... भवन्ति ।
३. जनाः ........ भवन्ति । ४. जनाः ........... भवन्ति ।

| अक्षराणि → श्लोकाः - वाक्यानि - पदानि - फलकानि - कथाः |
|---|

उदा - अक्षराणि श्लोकेषु भवन्ति ।

१. अक्षराणि ........... भवन्ति ।
२. अक्षराणि .......... भवन्ति ।
३. अक्षराणि ........... भवन्ति ।
४. अक्षराणि ......... भवन्ति ।

**II.** Write down the correct Vocative case form in the blanks.

६. माला - ................. (माले/माला/माल)

**III.** Write down "Yes" or "No" against the following statements.

1. लेट् Conjugation is found only in Vedas. (............)
2. Roots are divided into 11Classifications. (...........)
3. There are three conjugations in past tense. (...........)
4. 'अद्यतन' is for the period from morning to evening. (..........)
5. The suffix denoting the classification of roots is called 'विकरणप्रत्ययः' (...........)

(**Note :** Compare your answers with those on the end of this book and ascertain their correctness.)

## २. व्यावहारिकशब्दाः

### शाकानि/ शाकाः

१. निष्पावः = Beans
२. खण्डः = Piece
३. कूष्माण्डकः = Ash Gourd
४. पटोलः = Snake gourd
५. सूरणः = An succulent root
६. शिग्रुः = Drum stick
७. पलाण्डुः = Onion
८. मरीचिका = Chillies
९. कोशातकी = Ridge Gourd
१०. कदली = Plantain
११. शुण्ठी = Ginger
१२. शाकः = Vegetable
१३. वृन्ताकम् = Brinjal
१४. मूलकम् = Radish
१५. कारवेल्लम् = Bitter Gourd
१६. बिम्बफलम् = A kind of tree fruit.
१७. वास्तुकम् = A type of green leaf.
१८. उर्वारुकम् = Cucumber
१९. भिण्डीनकम् = Lady's finger.
२०. आलुकम् = Potato
२१. आम्रातकम् = Hog-plum
२२. मिष्टालुकम् = Sweet Potato
२३. हरितकम् = Green Leaves
२४. जम्बीरम् = Lemon
२५. नारिकेलम् = Coconut fruit
२६. कृष्णनिम्बम् = Curry leaves

२७. गृञ्जनकम् = Carrot २८. लशुनम् = Garlic

## ३. प्रहेलिका

सानुजः काननं गत्वा यातुधानान् जघान कः ?
मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद ।।

Who killed the demons after going to the forest with his brother ? Add three letters in the middle of that word and say what sort of person Rāvaṇa was ?

(**Answer** - See the Page No - 193)

## ४. सङ्ग्राह्यविषयाः

### आञ्जनेयः

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ।।

I Surrender to Maruti, the messenger of Sri Rama, who travels with the speed of mind and wind, and has conquered the sense organs; he is the fore most among wise people; he is the son of the wind god and the leader of the monkeys.

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगिता ।
अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणाद् भवेत् ।।

A sharp intellect, strength, tame, courage, fearlessness, good health, activity and expertise in speech - these are obtained by (remembering) praying to Lord Hanumān.

## ५. संस्कृतवाङ्मयपरिचयः

### वेणीसंहारम्

The author of the drama is Bhaṭṭa Nārāyaṇa.

The drama is based on an episode from the Mahābhārata. The story starts with Kṛṣṇa's efforts for peace on behalf of the Pāṇḍavas and ends with the killing of Duryodhana and the tying of

Draupadi's braid of hair. 'Veṇī' means braid of hair and 'Samhāra' means tying.

The theme of the drama is this: Śri Kṛṣṇa goes to the Kauravas for a peace treaty. The peace efforts are not to Bhīma's liking. The peace efforts break down. War is inevitable. Bhīma is delighted. The war begins. Droṇa dies in the war. The anger of Asvatthāman, the son of Droṇa, is doubled on account of this. Meanwhile, due to a quarrel between Aśvatthāman and Karṇa, Aśvatthāman relinquishes his arms (i.e declines to fight). Thereafter Duśśāsana and Karṇa die in the battle. Duryodhana enters the lake. Then the insulting words of Bhīma force him to come out and fight. Bhīma kills him in the fight. Then he plaits the hair of Draupadi into a braid. Dharmarāja is coronated.

The play wright has dramatised in six acts, the lengthy story of the Mahābhārata from the Udyogaparvan to the Śalyaparvan sustaining the interest throughout. The drama exactly conforms to the rules of dramaturgy in Samskrit. The technical Sandhi Sandhyanga - arrangement is very well evident in the drama.

## मृच्छकटिकम्

The author of the drama is Śūdraka.

The theme of the drama is the love story of Cārudatta and Vasantasenā. There is an episode of clay cart (मृत् - clay शकटिका - toy cart) here after which the play is named.

Cārudatta, who was once a rich man is now a poor man. He is a man of noble qualities. He is deeply in love with a courtesan called Vasantasenā. One day Vasantasenā deposits her ornaments with Cārudatta. Then the ornaments are stolen by a thief. Cārudatta sends in return the pearl necklace of his wife with the report that he lost the deposited ornaments in the game of dice. In the mean while, the stolen ornaments come into the hands of Vasantasenā through her maid servant called Madanikā. When Vasantasenā comes to Cārudatta to return the ornaments saying that she lost the pearl

necklace in the game of dice, Cārudatta's son is crying with a demand for a golden cart to play with. He has only a clay cart to play with. Vasantasenā puts her ornaments into the clay cart.

Leaving a message forVasantasenā that she should come in the cart, Cārudatta has left for the garden. Due to exchange of carts, Vasantasenā falls into the hands of the wicked Śakāra.Śakāra strangles her and thinks that she is dead. Then he shifts the crime on to Cārudatta. Cārudatta is proved the criminal in the court and is sent to the gallows. Meanwhile with the help of a monk Vasantasenā survives and comes on the scene. Śakāra is exposed. Cārudatta is released from the gallows and his marriage with Vasantasenā takes place .

The play wright has very nicely depicted the life of the ordinary men in the ancient society in this drama.The language used in this drama is very much akin to the spoken language.

## ६. कथा

### वैराग्येण एव तृप्तिः

चन्द्रगुप्तः मगधदेशस्य नृपः । तस्य मन्त्री चाणक्यः । सः तपोधनः, राजतन्त्रज्ञः च आसीत् । मन्त्री अपि सः एकस्मिन् उटजे वसति स्म । वैराग्यभावनया सः पूर्णः आसीत् । एकदा नृपः चाणक्याय कम्बलान् समर्पितवान् । 'एतान् कम्बलान् दरिद्रेभ्यः ददातु' इति सः सूचितवान् ।

चाणक्यस्य उटजं नगरात् बहिः आसीत् । केचन चोराः कम्बलान् अपहर्तुं चिन्तितवन्तः । ते रात्रौ चाणक्यस्य उटजं प्राविशन् । मध्यरात्र-समयः । शीत-कालः । अतीव शैत्यम् आसीत् । तथापि चाणक्यः कटे सुप्तः आसीत् । तस्य पत्नी अपि कटे एव सुप्ता आसीत् । पार्श्वे कम्बलानां राशिः एव आसीत् । चोराणाम् आश्चर्यम् ! पार्श्वे कम्बलानां राशिरेव अस्ति । चाणक्यः कम्बलं विना निद्रां करोति !! चोराः चौर्यं न अकुर्वन् । ते चाणक्यं प्रबोधितवन्तः । चोराः - ''चाणक्य ! पार्श्वे कम्बलानां राशिरेव अस्ति । तथाऽपि त्वं किमर्थं भूमौ शयनं करोषि ?'' इत्यपृच्छन् । चाणक्यः

उक्तवान् - ''कम्बलाः नृपेण दत्ताः । ते दरिद्रेभ्यः दातव्याः । श्वः प्रभाते वितरणं करिष्यामि । तेषाम् उपयोगं कर्तुं मम नास्ति अधिकारः । किञ्च अहं विरक्तः, सदा तृप्तः'' इति ।

इदं श्रुत्वा चोरेषु लज्जा उत्पन्ना । 'अन्येषां द्रव्यस्य उपयोगेन अधर्मः भवति इति चाणक्यस्य विचारः अस्ति । वयं जीवने प्रतिदिनम् अन्यस्य द्रव्यमेव अपहरामः, अधर्मं कुर्मः, पापस्य सङ्ग्रहश्च भवति' इति चिन्तयित्वा ते चाणक्यं क्षमां प्रार्थितवन्तः । ततः सज्जनाः अभवन् च ।

## Renunciation is the way of contentment

Candragupta was the king of Magadha kingdom. Cāṇakya was his minister. Cāṇakya was an ascetic well versed in the science of polity. Although he was a minister, he lived in a hut . He had renounced all pleasures. Once the king sent him blankets and instructed him that they should be distributed among the poor.

Cāṇakya's hut was on the outskrits of the city. Some thieves thought of stealing the blankets. In the night they entered the hut of Cāṇakya. It was midnight. The season was winter. There was severe chilliness. Yet Cāṇakya was sleeping on a mat. His wife was also sleeping on a mat. There was a heap of blankets by their side. The thieves were wonderstuck. There is a heap of blankets by his side. Cāṇakya sleeps without a blanket ! The thieves did not steal. They woke up Cāṇakya and asked - "O ! Cāṇakya ! There is a heap of blankets by your side. Yet why are you sleeping on the ground ?" Cāṇakya said - "Blankets are sent by the king. They are to be distributed among the poor Tomorrow morning I shall distribute them. I have no authority to use them. Moreover, I have renounced all pleasures and contented with what I have."

On hearing this, the thieves felt ashamed. "using other's wealth is unlawful - this is the principle of Cāṇakya. We are engaged in stealing the wealth of others everyday. We are breaking the law. We accumulate sin" - so saying they begged forgiveness from Cāṇakya. Thereafter they became good men.

**एतेषाम् उत्तरं लिखत -**

१. चन्द्रगुप्तस्य मन्त्री कः ?
२. नृपः चाणक्यं किं सूचितवान् ?
३. चोराः चाणक्यं किं पृष्टवन्तः ?
४. चाणक्यस्य विचारः कः आसीत् ?

## ७. संस्कृतव्यवहारः

**यत् - तत्**

Study the following sentences carefully:

१. **यः** द्वारे स्थितवान् **सः** मम अग्रजः ।
२. **या** दीर्घवेणी **सा** मम सखी गीता ।
३. **या** प्रार्थनां गायति **तस्यै** पुष्पं ददातु ।
४. **यत्** पत्रं प्राप्तं **तत्** मम पितुः पत्रम् ।
५. **यस्य** नाम भवती उक्तवती **तम्** अहं जानामि ।
६. **यां** शाटिकां भवान् आनयति **ताम्** अहम् इच्छामि एव ।
७. **यस्मिन्** भक्तिः अस्ति **तम्** एव ध्यायतु ।
८. **यया** सह गतवती आसं **तस्याः** पुस्तकम् एतत् ।
९. **येन** गीतं गीयते **तं** जनाः सत्कुर्वन्ति ।
१०. भवान् **यत्** स्मरति **तत्** अहं वदामि ।

By studying the above sentences we learn that wherever the word 'यद्' (यः, या, यत्) is used, there is the use of 'तद्' (सः, सा, तत्) as a rule. It is not necessary that both the words should be in the same case.

उदा - १. **यः** विजयं प्राप्तवान् **तस्मै** पारितोषिकं ददामि ।
२. **यस्याः** त्वरा अस्ति **सा** इदानीं गच्छतु ।
३. **यस्मात्** सः लेखनीम् आनीतवान् **तस्य** आपणस्य नाम किम् ?

Note that the case of 'तद् शब्द' is different from that of 'यद् शब्द'

**अभ्यासः -**

1. Fill in the blanks with the correct forms of "यद्" "तद्" declensions.

उदा - ............ मधुरं रोचते ....... देहि ।

यस्मै मधुरं रोचते तस्मै देहि ।

१. ....... भवत्यै रोचते ...... देहि ।

२. ....... धैर्यम् अस्ति ..... भवन्तः मतं यच्छन्तु ।

३. ....... पाठयति ...... शिक्षकः ।

४. ....... अक्षराणि सुन्दराणि ...... व्यक्तित्वमपि सुन्दरम् ।

५. भवान् ....... सह क्रीडितवान् ...... सह एव गच्छतु ।

६. ...... पेटिकायां शाटिका स्थापिता ..... पेटिकां मात्रे देहि ।

७. ..... मधुरं बहु रोचते ..... इक्षुदण्डः दीयते ।

८. ...... पुस्तकं भवती स्वीकृतवती ..... नाम श्रीदेवी ।

९. ...... शाटिकां पुत्रः इष्टवान् ...... स्नुषा न इष्टवती ।

१०. ..... वृक्षात् फलं पतितं ..... वृक्षम् आरोहतु ।

2. Match the following.

| | |
|---|---|
| १. या नृत्यति | अ. तत् लाभाय । |
| २. यत् प्राप्तं | आ. ते तत् स्वीकुर्वन्तु । |
| ३. यः असत्यवादी | इ. तां पश्य । |
| ४. येभ्यः यत् रोचते | ई. तासु मीनाः वसन्ति । |
| ५. यानि पुस्तकानि उत्तमानि | उ. सः निन्द्यते । |
| ६. यासु नदीषु जलं प्रवहति | ऊ. तानि पठ । |

3. Translate the following into Samskrit.

1. Throw away the pens which do not write properly.

2. Do not talk about subjects about which you know nothing.
3. Do not sing songs already sung by others.
4. The thief has stolen the bag which contained money.

(Answers given below)

## ८. सुभाषितम्

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ।।

A Yogin says to a king " I am here (ie. in the hermitage) contented with garments made of bark, while you are happy with your silken garments. Our contentment is the same. There is no difference whatever. He who has abundant desire, is poor. When there is contentment in the mind, who is rich and who is poor ?

**Answer to the Riddle**

रामः letters to be conjoined 'क्षसोत्त' = राक्षसोत्तमः

**उत्तराणि -**

**१.** १. यस्मै, तस्मै    २. यस्य, तस्मै    ३. यः, सः
४. यस्य, तस्य    ५. येन, तेन    ६. यस्यां, ताम्
७. यस्मै, तस्मै    ८. यस्याः, तस्याः    ९. यां, ताम्
१०. यस्मात्, तम्

**२.** १ - इ, २ - अ, ३ - उ, ४ - आ, ५ - ऊ, ६ - ई

**३.** १. याः लेखन्यः सम्यक् न लिखन्ति ताः क्षिप ।
२. भवान् यस्मिन् विषये न जानाति तस्मिन् विषये न वदतु ।
३. यत् गीतम् अन्ये गायन्ति तत् गीतं न गायतु ।
४. यस्मिन् स्यूते धनम् आसीत् तम् एव स्यूतं चोरः अपहृतवान् अस्ति ।

# प्रवेश - दशमः पाठः
## प्रश्नाः

1. Fill in the blanks with the locative forms of the nouns given in brackets.

उदा - कङ्कणं (हस्तः) हस्ते शोभते ।

१. तस्य मनः (विचाराः) ...... मग्नम् अस्ति ।

२. गायिकाः (कार्यक्रमः) ....... गायन्ति ।

३. अज्ञाः (विद्वद्गोष्ठ्यः) ...... निद्रां कुर्वन्ति ।

४. (गङ्गानदी) ........ बहु जलचराः सन्ति ।

५. बीजानि (फलानि) ........... भवन्ति ।

६. कृष्णस्य (ललाटम्) ......... तिलकं विराजते ।

७. शिशुः (आन्दोलिका) .......... क्रीडति ।

८. देवाः (सुरलोकः) .......... वसन्ति ।

2. Give the singular and plural forms in the locative for the following.

उदा - सः - तस्मिन् तेषु

१. अहम्, २. माता, ३. शम्भुः, ४. लेखनी, ५. कः

3. Answer the following.

1. What is meant by 'Veṇīsamhāra' ?
2. How many lakāras are there in future tense ?
3. When does subhaśitakāra identify as poor.
4. How many Lakāras are there ?
5. When is 'लङ्' lakāra used ?
6. Which dhātu is called 'Ubhayapadī' ?

(**Note:** Answers for the above exercises are given in the end of this book. After completing them, check your answers.)

# प्रवेशः - एकादशः पाठः

।। क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैश्शिरसामतीव ।।
"Men of lofty ideals take into their fold even the lowly ones that surrender them."

In the earlier lessons you were introduced to the seven cases in Samskrit. You must have noted that words change in their form depending on the gender and ending. In each of the preceding lessons one **विभक्ति** - case ending was taught and the forms of various words **अकारान्त**, **इकारान्त** etc., in that particular **विभक्ति** were given there.

In this lesson the complete declension of a word is given to facilitate easy memorisation. It will also help you to recognise the different forms of a word. In addition to these declensions that are given in the alphabetical order of the ending letters, two verbs **भवति** (**परस्मैपदी**) and **वन्दते** (**आत्मनेपदी**) are conjugated in the ten Lakaras. At the next level '**परिचय**' you will be introduced to the verbal forms of all the ten conjugations (**गणाः**) in five Lakaras.

We advise you to devote some time exclusively for memorising these declensions and conjugations. This exercise will go a long way in acquiring command over the language.

**१.१. अकारान्तः पुंलिङ्गः 'राम'शब्दः**

| | ए.व. | द्वि.व. | ब.व. |
|---|---|---|---|
| प्र.वि. | रामः | रामौ | रामाः |

| | | | |
|---|---|---|---|
| सं.प्र.वि. | हे राम | हे रामौ | हे रामाः |
| द्वि.वि. | रामम् | रामौ | रामान् |
| तृ.वि. | रामेण | रामाभ्याम् | रामैः |
| च.वि. | रामाय | रामाभ्याम् | रामेभ्यः |
| पं.वि. | रामात् | रामाभ्याम् | रामेभ्यः |
| ष.वि. | रामस्य | रामयोः | रामाणाम् |
| स.वि. | रामे | रामयोः | रामेषु |

एवं गोविन्दः, मुकुन्दः, कृष्णः, वृक्षः, विकासः, देवालयः इत्यादयः ।

### १.२. इकारान्तः पुंलिङ्गः 'हरि'शब्दः

| | | |
|---|---|---|
| हरिः | हरी | हरयः |
| हे हरे | हे हरी | हे हरयः |
| हरिम् | हरी | हरीन् |
| हरिणा | हरिभ्याम् | हरिभिः |
| हरये | हरिभ्याम् | हरिभ्यः |
| हरेः | हरिभ्याम् | हरिभ्यः |
| हरेः | हर्योः | हरीणाम् |
| हरौ | हर्योः | हरिषु |

एवं रविः, कविः, मुनिः, यतिः, पाणिः, अग्निः, कपिः इत्यादयः ।

### १.३. इकारान्तः पुंलिङ्गः 'पति'शब्दः

| | | |
|---|---|---|
| पतिः | पती | पतयः |
| हे पते | हे पती | हे पतयः |
| पतिम् | पती | पतीन् |
| पत्या | पतिभ्याम् | पतिभिः |
| पत्ये | पतिभ्याम् | पतिभ्यः |
| पत्युः | पतिभ्याम् | पतिभ्यः |
| पत्युः | पत्योः | पतीनाम् |
| पत्यौ | पत्योः | पतिषु |

**१.४. उकारान्तः पुंलिङ्गः 'गुरु'शब्दः**

| गुरुः | गुरू | गुरवः |
|---|---|---|
| हे गुरो | हे गुरू | हे गुरवः |
| गुरुम् | गुरू | गुरून् |
| गुरुणा | गुरुभ्याम् | गुरुभिः |
| गुरवे | गुरुभ्याम् | गुरुभ्यः |
| गुरोः | गुरुभ्याम् | गुरुभ्यः |
| गुरोः | गुर्वोः | गुरूणाम् |
| गुरौ | गुर्वोः | गुरुषु |

एवं भानुः, विष्णुः, साधुः, बाहुः, बन्धुः, शत्रुः, पटुः, रिपुः इत्यादयः ।

**१.५. ऋकारान्तः पुंलिङ्गः 'कर्तृ'शब्दः**

| कर्ता | कर्तारौ | कर्तारः |
|---|---|---|
| हे कर्तः | हे कर्तारौ | हे कर्तारः |
| कर्तारम् | कर्तारौ | कर्तॄन् |
| कर्त्रा | कर्तृभ्याम् | कतृभिः |
| कर्त्रे | कर्तृभ्याम् | कर्तृभ्यः |
| कर्तुः | कर्तृभ्याम् | कर्तृभ्यः |
| कर्तुः | कर्त्रोः | कर्तॄणाम् |
| कर्तरि | कर्त्रोः | कर्तृषु |

एवं नेता, श्रोता, वक्ता, दाता, जेता, गन्ता, हर्ता, भर्ता, नप्ता इत्यादयः ।

**१.६. ऋकारान्तः पुंलिङ्गः 'पितृ'शब्दः**

| पिता | पितरौ | पितरः |
|---|---|---|
| हे पितः | हे पितरौ | हे पितरः |
| पितरम् | पितरौ | पितॄन् |
| पित्रा | पितृभ्याम् | पितृभिः |
| पित्रे | पितृभ्याम् | पितृभ्यः |
| पितुः | पितृभ्याम् | पितृभ्यः |
| पितुः | पित्रोः | पितॄणाम् |
| पितरि | पित्रोः | पितृषु |

एवं भ्राता, जामाता इत्यादयः ।

**१.७. ओकारान्तः पुंलिङ्गः 'गो'शब्दः**

| | | |
|---|---|---|
| गौः | गावौ | गावः |
| हे गौः | हे गावौ | हे गावः |
| गाम् | गावौ | गाः |
| गवा | गोभ्याम् | गोभिः |
| गवे | गोभ्याम् | गोभ्यः |
| गोः | गोभ्याम् | गोभ्यः |
| गोः | गवोः | गवाम् |
| गवि | गवोः | गोषु |

**१.८. जकारान्तः पुंलिङ्गः 'वणिज्'शब्दः**

| | | |
|---|---|---|
| वणिक् | वणिजौ | वणिजः |
| हे वणिक् | हे वणिजौ | हे वणिजः |
| वणिजम् | वणिजौ | वणिजः |
| वणिजा | वणिग्भ्याम् | वणिग्भिः |
| वणिजे | वणिग्भ्याम् | वणिग्भ्यः |
| वणिजः | वणिग्भ्याम् | वणिग्भ्यः |
| वणिजः | वणिजोः | वणिजाम् |
| वणिजि | वणिजोः | वणिक्षु |

एवं भिषक्, ऋत्विक्, हुतभुक् इत्यादयः ।

**१.९. तकारान्तः पुंलिङ्गः 'मरुत्'शब्दः**

| | | |
|---|---|---|
| मरुत् | मरुतौ | मरुतः |
| हे मरुत् | हे मरुतौ | हे मरुतः |
| मरुतम् | मरुतौ | मरुतः |
| मरुता | मरुद्भ्याम् | मरुद्भिः |
| मरुते | मरुद्भ्याम् | मरुद्भ्यः |
| मरुतः | मरुद्भ्याम् | मरुद्भ्यः |
| मरुतः | मरुतोः | मरुताम् |
| मरुति | मरुतोः | मरुत्सु |

एवं शूलभृत्, जाग्रत् इत्यादयः ।

### १.१०. तकारान्तः पुंलिङ्गः 'पचत्'शब्दः

| | | |
|---|---|---|
| पचन् | पचन्तौ | पचन्तः |
| हे पचन् | हे पचन्तौ | हे पचन्तः |
| पचन्तम् | पचन्तौ | पचतः |
| पचता | पचद्भ्याम् | पचद्भिः |
| पचते | पचद्भ्याम् | पचद्भ्यः |
| पचतः | पचद्भ्याम् | पचद्भ्यः |
| पचतः | पचतोः | पचताम् |
| पचति | पचतोः | पचत्सु |

एवं कुर्वन्, तन्वन्, पठन्, पिबन्, खादन्, हसन्, नयन्, पतन् इत्यादयः ।

### १.११. तकारान्तः पुंलिङ्गः 'धीमत्'शब्दः

| | | |
|---|---|---|
| धीमान् | धीमन्तौ | धीमन्तः |
| हे धीमन् | हे धीमन्तौ | हे धीमन्तः |
| धीमन्तम् | धीमन्तौ | धीमतः |
| धीमता | धीमद्भ्याम् | धीमद्भिः |
| धीमते | धीमद्भ्याम् | धीमद्भ्यः |
| धीमतः | धीमद्भ्याम् | धीमद्भ्यः |
| धीमतः | धीमतोः | धीमताम् |
| धीमति | धीमतोः | धीमत्सु |

एवं श्रीमान्, हनुमान्, सत्यवान्, धैर्यवान्, लिखितवान्, धनवान् इत्यादयः ।

### १.१२. तकारान्तः पुंलिङ्गः 'महत्'शब्दः

| | | |
|---|---|---|
| महान् | महान्तौ | महान्तः |
| हे महन् | हे महान्तौ | हे महान्तः |
| महान्तम् | महान्तौ | महतः |
| महता | महद्भ्याम् | महद्भिः |
| महते | महद्भ्याम् | महद्भ्यः |
| महतः | महद्भ्याम् | महद्भ्यः |
| महतः | महतोः | महताम् |
| महति | महतोः | महत्सु |

**१.१३. नकारान्तः पुंलिङ्गः 'आत्मन्'शब्दः**

| | | |
|---|---|---|
| आत्मा | आत्मानौ | आत्मानः |
| हे आत्मन् | हे आत्मानौ | हे आत्मानः |
| आत्मानम् | आत्मानौ | आत्मनः |
| आत्मना | आत्मभ्याम् | आत्मभिः |
| आत्मने | आत्मभ्याम् | आत्मभ्यः |
| आत्मनः | आत्मभ्याम् | आत्मभ्यः |
| आत्मनः | आत्मनोः | आत्मनाम् |
| आत्मनि | आत्मनोः | आत्मसु |

**१.१४. नकारान्तः पुंलिङ्गः 'राजन्'शब्दः**

| | | |
|---|---|---|
| राजा | राजानौ | राजानः |
| हे राजन् | हे राजानौ | हे राजानः |
| राजानम् | राजानौ | राज्ञः |
| राज्ञा | राजभ्याम् | राजभिः |
| राज्ञे | राजभ्याम् | राजभ्यः |
| राज्ञः | राजभ्याम् | राजभ्यः |
| राज्ञः | राज्ञोः | राज्ञाम् |
| राज्ञि/राजनि | राज्ञोः | राजसु |

**१.१५. नकारान्तः पुंलिङ्गः 'गुणिन्'शब्दः**

| | | |
|---|---|---|
| गुणी | गुणिनौ | गुणिनः |
| हे गुणिन् | हे गुणिनौ | हे गुणिनः |
| गुणिनम् | गुणिनौ | गुणिनः |
| गुणिना | गुणिभ्याम् | गुणिभिः |
| गुणिने | गुणिभ्याम् | गुणिभ्यः |
| गुणिनः | गुणिभ्याम् | गुणिभ्यः |
| गुणिनः | गुणिनोः | गुणिनाम् |
| गुणिनि | गुणिनोः | गुणिषु |

एवं जीवी, रूपी, प्राणी, योगी, देही, संन्यासी, मन्त्री, धनी इत्यादयः ।

**१.१६. शकारान्तः पुंलिङ्गः 'तादृश्'शब्दः**

| | | |
|---|---|---|
| तादृक्-ग् | तादृशौ | तादृशः |
| हे तादृक्-ग् | हे तादृशौ | हे तादृशः |
| तादृशम् | तादृशौ | तादृशः |
| तादृशा | तादृग्भ्याम् | तादृग्भिः |
| तादृशे | तादृग्भ्याम् | तादृग्भ्यः |
| तादृशः | तादृग्भ्याम् | तादृग्भ्यः |
| तादृशः | तादृशोः | तादृशाम् |
| तादृशि | तादृशोः | तादृक्षु |

एवं यादृक्, कीदृक्, एतादृक् इत्यादयः ।

**१.१७. सकारान्तः पुंलिङ्गः 'वेधस्'शब्दः**

| | | |
|---|---|---|
| वेधाः | वेधसौ | वेधसः |
| हे वेधः | हे वेधसौ | हे वेधसः |
| वेधसम् | वेधसौ | वेधसः |
| वेधसा | वेधोभ्याम् | वेधोभिः |
| वेधसे | वेधोभ्याम् | वेधोभ्यः |
| वेधसः | वेधोभ्याम् | वेधोभ्यः |
| वेधसः | वेधसोः | वेधसाम् |
| वेधसि | वेधसोः | वेधस्सु |

एवं चन्द्रमाः, सुमनाः, दुर्मनाः इत्यादयः ।

**१.१८. सकारान्तः पुंलिङ्गः 'विद्वस्'शब्दः**

| | | |
|---|---|---|
| विद्वान् | विद्वांसौ | विद्वांसः |
| हे विद्वन् | हे विद्वांसौ | हे विद्वांसः |
| विद्वांसम् | विद्वांसौ | विदुषः |
| विदुषा | विद्वद्भ्याम् | विद्वद्भिः |
| विदुषे | विद्वद्भ्याम् | विद्वद्भ्यः |
| विदुषः | विद्वद्भ्याम् | विद्वद्भ्यः |
| विदुषः | विदुषोः | विदुषाम् |
| विदुषि | विदुषोः | विद्वत्सु |

## ।। अथ स्त्रीलिङ्गशब्दाः ।।

### २.१. आकारान्तः स्त्रीलिङ्गः 'रमा'शब्दः

| | | |
|---|---|---|
| रमा | रमे | रमाः |
| हे रमे | हे रमे | हे रमाः |
| रमाम् | रमे | रमाः |
| रमया | रमाभ्याम् | रमाभिः |
| रमायै | रमाभ्याम् | रमाभ्यः |
| रमायाः | रमाभ्याम् | रमाभ्यः |
| रमायाः | रमयोः | रमाणाम् |
| रमायाम् | रमयोः | रमासु |

एवं माला, शाला, भिक्षा, लज्जा, लता, भाषा, क्षमा, गुहा, छाया इत्यादयः ।

### २.२. इकारान्तः स्त्रीलिङ्गः 'मति'शब्दः

| | | |
|---|---|---|
| मतिः | मती | मतयः |
| हे मते | हे मती | हे मतयः |
| मतिम् | मती | मतीः |
| मत्या | मतिभ्याम् | मतिभिः |
| मत्यै/मतये | मतिभ्याम् | मतिभ्यः |
| मत्याः/मतेः | मतिभ्याम् | मतिभ्यः |
| मत्याः/मतेः | मत्योः | मतीनाम् |
| मत्याम् /मतौ | मत्योः | मतिषु |

एवं श्रुतिः, कीर्तिः, मूर्तिः, कृतिः, धृतिः, प्रकृतिः, स्तुतिः, भक्तिः इत्यादयः ।

### २.३. ईकारान्तः स्त्रीलिङ्गः 'गौरी'शब्दः

| | | |
|---|---|---|
| गौरी | गौर्यौ | गौर्यः |
| हे गौरि | हे गौर्यौ | हे गौर्यः |
| गौरीम् | गौर्यौ | गौरीः |
| गौर्या | गौरीभ्याम् | गौरीभिः |
| गौर्यै | गौरीभ्याम् | गौरीभ्यः |
| गौर्याः | गौरीभ्याम् | गौरीभ्यः |
| गौर्याः | गौर्योः | गौरीणाम् |
| गौर्याम् | गौर्योः | गौरीषु |

एवं जननी, काली, देवी, वाणी, सखी, भगिनी, पत्नी, कुमारी इत्यादयः ।

**२.४. ईकारान्तः स्त्रीलिङ्गः 'स्त्री'शब्दः**

| | | |
|---|---|---|
| स्त्री | स्त्रियौ | स्त्रियः |
| हे स्त्रि | हे स्त्रियौ | हे स्त्रियः |
| स्त्रियम्/स्त्रीम् | स्त्रियौ | स्त्रियः/स्त्रीः |
| स्त्रिया | स्त्रीभ्याम् | स्त्रीभिः |
| स्त्रियै | स्त्रीभ्याम् | स्त्रीभ्यः |
| स्त्रियाः | स्त्रीभ्याम् | स्त्रीभ्यः |
| स्त्रियाः | स्त्रियोः | स्त्रीणाम् |
| स्त्रियाम् | स्त्रियोः | स्त्रीषु |

**२.५. ईकारान्तः स्त्रीलिङ्गः 'श्री'शब्दः**

| | | |
|---|---|---|
| श्रीः | श्रियौ | श्रियः |
| हे श्रीः | हे श्रियौ | हे श्रियः |
| श्रियम् | श्रियौ | श्रियः |
| श्रिया | श्रीभ्याम् | श्रीभिः |
| श्रियै/श्रिये | श्रीभ्याम् | श्रीभ्यः |
| श्रियाः/श्रियः | श्रीभ्याम् | श्रीभ्यः |
| श्रियाः/श्रियः | श्रियोः | श्रीणाम्/श्रियाम् |
| श्रियाम्/श्रियि | श्रियोः | श्रीषु |

**२.६. ईकारान्तः स्त्रीलिङ्गः 'लक्ष्मी'शब्दः**

| | | |
|---|---|---|
| लक्ष्मीः | लक्ष्म्यौ | लक्ष्म्यः |
| हे लक्ष्मि | हे लक्ष्म्यौ | हे लक्ष्म्यः |
| लक्ष्मीम् | लक्ष्म्यौ | लक्ष्मीः |
| लक्ष्म्या | लक्ष्मीभ्याम् | लक्ष्मीभिः |
| लक्ष्म्यै | लक्ष्मीभ्याम् | लक्ष्मीभ्यः |
| लक्ष्म्याः | लक्ष्मीभ्याम् | लक्ष्मीभ्यः |
| लक्ष्म्याः | लक्ष्म्योः | लक्ष्मीणाम् |
| लक्ष्म्याम् | लक्ष्म्योः | लक्ष्मीषु |

एवम् अवीः, तन्त्रीः, तरीः, धीः इत्यादयः ।

**२.७. उकारान्तः स्त्रीलिङ्गः 'धेनु'शब्दः**

| | | |
|---|---|---|
| धेनुः | धेनू | धेनवः |
| हे धेनो | हे धेनू | हे धेनवः |
| धेनुम् | धेनू | धेनूः |
| धेन्वा | धेनुभ्याम् | धेनुभिः |
| धेन्वै/धेनवे | धेनुभ्याम् | धेनुभ्यः |
| धेन्वाः/धेनोः | धेनुभ्याम् | धेनुभ्यः |
| धेन्वाः/धेनोः | धेन्वोः | धेनूनाम् |
| धेन्वाम्/धेनौ | धेन्वोः | धेनुषु |

एवं तनुः, रेणुः, रज्जुः इत्यादयः ।

**२.८. ऊकारान्तः स्त्रीलिङ्गः 'वधू'शब्दः**

| | | |
|---|---|---|
| वधूः | वध्वौ | वध्वः |
| हे वधु | हे वध्वौ | हे वध्वः |
| वधूम् | वध्वौ | वधूः |
| वध्वा | वधूभ्याम् | वधूभिः |
| वध्वै | वधूभ्याम् | वधूभ्यः |
| वध्वाः | वधूभ्याम् | वधूभ्यः |
| वध्वाः | वध्वोः | वधूनाम् |
| वध्वाम् | वध्वोः | वधूषु |

एवं चमूः, श्वश्रूः इत्यादयः ।

**२.९. ऋकारान्तः स्त्रीलिङ्गः 'मातृ'शब्दः**

| | | |
|---|---|---|
| माता | मातरौ | मातरः |
| हे मातः | हे मातरौ | हे मातरः |
| मातरम् | मातरौ | मातॄः |
| मात्रा | मातृभ्याम् | मातृभिः |
| मात्रे | मातृभ्याम् | मातृभ्यः |
| मातुः | मातृभ्याम् | मातृभ्यः |
| मातुः | मात्रोः | मातॄणाम् |
| मातरि | मात्रोः | मातृषु |

एवं दुहिता, याता इत्यादयः ।

**२.१०. ऋकारान्तः स्त्रीलिङ्गः 'स्वसृ'शब्दः**

| | | |
|---|---|---|
| स्वसा | स्वसारौ | स्वसारः |
| हे स्वसः | हे स्वसारौ | हे स्वसारः |
| स्वसारम् | स्वसारौ | स्वसॄः |

शिष्टानि मातृशब्दवत् रूपाणि ।

**२.११. धकारान्तः स्त्रीलिङ्गः 'क्षुध्'शब्दः**

| | | |
|---|---|---|
| क्षुत् | क्षुधौ | क्षुधः |
| हे क्षुत् | हे क्षुधौ | हे क्षुधः |
| क्षुधम् | क्षुधौ | क्षुधः |
| क्षुधा | क्षुद्भ्याम् | क्षुद्भिः |
| क्षुधे | क्षुद्भ्याम् | क्षुद्भ्यः |
| क्षुधः | क्षुद्भ्याम् | क्षुद्भ्यः |
| क्षुधः | क्षुधोः | क्षुधाम् |
| क्षुधि | क्षुधोः | क्षुत्सु |

एवं वीरुध् इत्यादयः ।

**२.१२. शकारान्तः स्त्रीलिङ्गः 'दिश्'शब्दः**

| | | |
|---|---|---|
| दिक् | दिशौ | दिशः |
| हे दिक् | हे दिशौ | हे दिशः |
| दिशम् | दिशौ | दिशः |
| दिशा | दिग्भ्याम् | दिग्भिः |
| दिशे | दिग्भ्याम् | दिग्भ्यः |
| दिशः | दिग्भ्याम् | दिग्भ्यः |
| दिशः | दिशोः | दिशाम् |
| दिशि | दिशोः | दिक्षु |

**२.१३. तकारान्तः स्त्रीलिङ्गः 'सरित्'शब्दः**

| | | |
|---|---|---|
| सरित् | सरितौ | सरितः |
| हे सरित् | हे सरितौ | हे सरितः |
| सरितम् | सरितौ | सरितः |

अन्यानि रूपाणि 'महत्'शब्दवत् (१.१२) ऊह्यानि ।

एवं योषित् इत्यादयः ।

## ।। अथ नपुंसकलिङ्गशब्दाः ।।

### ३.१. अकारान्तः नपुंसकलिङ्गः 'ज्ञान'शब्दः

| | | |
|---|---|---|
| ज्ञानम् | ज्ञाने | ज्ञानानि |
| हे ज्ञान | हे ज्ञाने | हे ज्ञानानि |
| ज्ञानम् | ज्ञाने | ज्ञानानि |
| ज्ञानेन | ज्ञानाभ्याम् | ज्ञानैः |
| ज्ञानाय | ज्ञानाभ्याम् | ज्ञानेभ्यः |
| ज्ञानात् | ज्ञानाभ्याम् | ज्ञानेभ्यः |
| ज्ञानस्य | ज्ञानयोः | ज्ञानानाम् |
| ज्ञाने | ज्ञानयोः | ज्ञानेषु |

एवं फलं, पुस्तकं, पुष्पं, जलं, द्वारं, ललाटं, मुखं, पत्रं, वातायनम् इत्यादयः ।

### ३.२. इकारान्तः नपुंसकलिङ्गः 'वारि'शब्दः

| | | |
|---|---|---|
| वारि | वारिणी | वारीणि |
| हे वारे/हे वारि | हे वारिणी | हे वारीणि |
| वारि | वारिणी | वारीणि |
| वारिणा | वारिभ्याम् | वारिभिः |
| वारिणे | वारिभ्याम् | वारिभ्यः |
| वारिणः | वारिभ्याम् | वारिभ्यः |
| वारिणः | वारिणोः | वारीणाम् |
| वारिणि | वारिणोः | वारिषु |

एवं दधि, शुचि, आदि, सुरभि इत्यादयः ।

### ३.३. उकारान्तः नपुंसकलिङ्गः 'मधु'शब्दः

| | | |
|---|---|---|
| मधु | मधुनी | मधूनि |
| हे मधो/हे मधु | हे मधुनी | हे मधूनि |
| मधु | मधुनी | मधूनि |
| मधुना | मधुभ्याम् | मधुभिः |
| मधुने | मधुभ्याम् | मधुभ्यः |
| मधुनः | मधुभ्याम् | मधुभ्यः |
| मधुनः | मधुनोः | मधूनाम् |
| मधुनि | मधुनोः | मधुषु |

एवम् अम्बु, श्मश्रु, वस्तु, अश्रु, मृदु, स्वादु, दारु, गुरु, लघु इत्यादयः ।

